THE

# RATNÂVALÎ

OF

# S'RÎHARSHADEVA.

with the commentary of

GOVINDA.





EDITED BY

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED
BY
TUKÂRÂM JÂVAJÎ,
PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.
BOMBAY.

1895.

*Price 8 Annas.*

महाकविश्रीहर्षदेवविरचिता

# रत्नावली । 

गोविन्दकृतया व्याख्यया समेता ।

काशीनाथ पाण्डुरङ्ग परब

इत्यनेन संस्कृता ।

सा च

शाके १८१७ वत्सरे

मुम्बय्यां

निर्णयसागरयन्त्रालयाधिपतिना मुद्रिता ।

मूल्यं ८ आणकाः ।

॥ श्रीः ॥

महाकविश्रीहर्षदेवविरचिता

# रत्नावली ।

गोविन्दकृतया व्याख्यया समेता ।

प्रथमोऽङ्कः ।

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।
ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ १ ॥

अपि च ।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।

---

## रत्नावलीद्युतिः ।

गणाग्रगण्यः स ददात्वगण्यकल्याणपल्याणगणं नृणां ना ।
नाभ्यस्तजज्ञानसमानमानं तुष्टे पते विघ्नतमोतमोहा ॥
गोविन्देन विदा विद्वदामोदाय सदा मुदा ।
रत्नावली नृरत्नेन द्योत्यते नाटिकाधिका ॥

प्रारिप्सितपरिसमाप्तिस्वेष्टदेवतास्मृत्याशीरूपमङ्गलमनुचरति नान्दीचतु-
[illegible]—**पादाग्रस्थितयेति** । विश्लिष्यञ्शिथिलीभवन्कुसुमाञ्जलिः पुष्पाञ्जलिः
[illegible]ति शिवशिवास्मृतिर्मङ्गलमिति सूचितम् । शेषं स्पष्टम् ॥१॥ **औत्सुक्येनेति।**
औ[त्स]ुक्येनोत्कण्ठत्वेन कृतत्वरातित्वरिता सहभुवा सहवर्तमानया ह्रिया व्यावर्त-
मानम परावृत्ता । अथवा सह भवति तत्सहभूतं तेन यौवनेनौत्सुक्येनात्यादर-
संपश्र्चकेन कृतत्वरा । अथवा यौवनदशायां सहवर्तमानेन कामेनौत्सुक्येन संतो-
[illegible]केन कृतत्वरा । बन्धुवधूजनस्य वचनैः सखीजनोक्तिभिः । शिवाय

दृष्टाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २

अपि च ।

क्रोधेद्धैर्दृष्टिपातैर्मुहुरुपशमिता वह्नयोऽमी त्रयोऽपि
त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति ।
दक्षः स्तौत्यस्य पत्नी विलपति करुणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥

किं च ।

जितमुडुपतिना नमः सुरेभ्यो
द्विजवृषभा निरुपद्रवा भवन्तु ।
भवतु च पृथिवी समृद्धसस्या
प्रतपतु चन्द्रवपुर्नरेन्द्रचन्द्रः ॥ ४ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिप्रसङ्गेन । अद्याहं वसन्तोत्सवे सबहु नमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोप विना राजसमूहेनोक्तः । यथा—'अस्मत्स्वामिना श्रीहर्षदेवेना वस्तुरचनालंकृता रत्नावली नाम नाटिका कृतेत्यस्माभिः श्रो परम्परया श्रुता । न तु प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सकलज

---

कल्याणाय भवत्विति ॥ २ ॥ **क्रोधेद्धैरिति** । क्रोधेद्धैः क्रोधेनेद्धैः प्रद दृष्टिपातैर्दृक्पातैरमी त्रयोऽपि गार्हपत्यदाक्षिणाग्न्याहवनीया वह्नय उपशमि नाशिताः । अस्य दक्षस्य । मखमथनविधौ यज्ञनाशसमय इति ॥ ३ **जितमिति** । सर्वोत्कर्षेण स्थितमिति । प्रजासुखकारित्वात् । नरेन्द्रचन्द्रो न्द्रलक्षणश्चन्द्रः प्रतपतु सर्वोत्कर्षेण तिष्ठत्विति ॥ ४ ॥ **नान्द्यन्त इ** आशीर्नमस्क्रियादिरूपमङ्गलकरणं नान्दी तस्या अन्ते । सूत्रं कार्यसूचनं तीति सूत्रधारः कथकः । उपतिष्ठत इति शेषः । 'सूत्रं कार्यस्य सूचना नयलोचनः । **अद्येति** । पादपद्मोपजीविना चरणसेवनमुपजीवनं वर्तन राजसमूहेन राजसमुदायेन । उक्त आज्ञप्त इति । **यथेति** । अपूर्वरूपा

Digitized By Siddhanta eGangotri Gyaan Kosha



हृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयितव्या' इति । तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं संपादयामि । अये, आवर्जितानि च मया सकलसामाजिकानां मनांसीति मे निश्चयः । यतः ।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ५ ॥

तद्यावद्गृहं गत्वा गृहिणीमाहूय संगीतकमनुतिष्ठामि । (परिक्रम्य नेपथ्याभिमुखमवलोक्य च ।) इदमस्मदीयं गृहम् । यावत्प्रविशामि । (प्रविश्य ।) आर्ये, इतस्तावत् ।

(प्रविश्य ।)

**नटी**—अज्जउत्त, इअह्मि । आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति । (क)

**सूत्रधारः**—आर्ये, रत्नावलीदर्शनसमुत्सुकोऽयं राजलोकः । तद्गृह्यतां नेपथ्यम् ।

**नटी**—(सोद्वेगम् ।) अज्जउत्त, णिच्चिन्तो दाणिं सि तुमम् । ता कीस ण णच्चसि । मह मन्दभाआए उण एक्का जेव्व दुहिदा । सा वि तुए कहिंचि देसन्तरे दिण्णा । कहं एव्वं दूरदेस-

---

(क) आर्यपुत्र, इयमस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयताम् इति ।

---

...कृतापूर्वार्थगुम्फनशोभिता । प्रयोगतः प्रयोगकरणत इति । **अये इति** । आवर्जितानि वशीभू(कृ)तानि । **श्रीहर्ष इति** । हारि मनोहारि । दक्षाः समर्थाः । ...स्थानम् । अयमव्यवहितोक्तः ॥ ५ ॥ गृहिणी पत्नी । **नटी** । आर्यपुत्र, इयमस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति । **नटी** । आर्यपुत्र, निश्चिन्त इदानीमसि त्वम् । तत्किमिति न नृत्यसि । मम मन्दभाग्यायाः पुनरेकैव दुहिता । सापि त्वया कस्मिंश्चिद्देशान्तरे दत्ता । कथमेवं दूरदेशस्थितेन

द्विदेण जामातुणा सह से पाणिग्गहणं भविस्सदि त्ति इमाए चिन्त
अप्पा वि ण मे पडिभादि । किं उण णच्चिदव्वम् । (क)

**सूत्रधारः**—आर्ये, दूरस्थेनेत्यलमुद्वेगेन । पश्य ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ६

(नेपथ्ये ।)

साधु । भरतपुत्र, साधु । एवमेतत् । कः संदेहः । ('द्वीपात्–' (१
इत्यादि पठति ।)

**सूत्रधारः**—(आकर्ण्य सहर्षम् ।) आर्ये, नन्वयं मम यवीयान्भ्र
गृहीतयौगंधरायणभूमिकः प्राप्त एव । तदेहि । आवामपि नेपथ्यग्र
णाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

**इति प्रस्तावना ।**

(ततः प्रविशति यथानिर्दिष्टो यौगंधरायणः ।)

**यौगंधरायणः**—एवमेतत् । कः संदेहः । ('द्वीपात्–'(१।६)
पुनः पठित्वा ।) अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्व

---

(क) आर्यपुत्र, निश्चिन्त इदानीमसि त्वम् । तत्किमिति न
र्त्यसि । मम मन्दभाग्यायाः पुनरेकैव दुहिता । सापि त्वया कस्मिं
श्चिद्देशान्तरे दत्ता । कथमेवं दूरदेशस्थितेन जामात्रा सहास्याः पा
ग्रहणं भविष्यतीत्यनया चिन्तयात्मापि न मे प्रतिभाति । किं पुनर्न
तव्यम् ।

---

जामात्रा सहास्याः पाणिग्रहणं भविष्यतीत्यनया चिन्तयात्मापि न मे प्रतिभा
किं पुनर्नर्तितव्यम्। **सूत्रधारः—द्वीपादिति**।अभिमतमिष्टम्। अभिमुखीभू
संमुखीभूतः। घटयति योजयति॥६॥ **नन्विति**। यवीयान्कनिष्ठः। गृहीतयौ
धरायणभूमिको धृतयौगंधरायणवेष इति। **यौगंधरायणः—अन्यथेति**।

हितुः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनम् । क्व च कौ-
शाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः संभावनम् ।
रत्नमालाचिह्नायाः प्रत्यभिज्ञानादिहानयनं च । (सहर्षम् ।) सर्वथा
स्पृशन्ति नः स्वामिनमभ्युदयाः । (विचिन्त्य ।) मयापि चैनां देवी-
हस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितम् । श्रुतं च मया बाभ्रव्यो-
ऽपि कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथंकथमपि समु-
द्रादुत्तीर्य कोसलोच्छित्तये गतस्य रुमण्वतो मिलित इति । तदेवं
निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहतीति कष्टोऽयं खलु
भृत्यभावः ।

प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ
दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि
स्वेच्छाचारी भीत एवास्मि भर्तुः ॥ ७ ॥

(नेपथ्ये कलकलः ।)

**यौगंधरायणः**—(आकर्ण्य ।) अये, मधुरमभिहन्यमानमृदुमृ-
दङ्गानुगतसंगीतमधुरः पुरः पौराणां समुच्चरति चर्चरीध्वनिः । तथा
तर्कयामि यदेनं मदनमहमहीयांसं पुरजनप्रमोदमवलोकयितुं प्रासा-
दाभिमुखं प्रस्थितो देव इति । य एष

विश्रान्तविग्रहकथो रतिमाञ्जनस्य
चित्ते वसन्प्रियवसन्तक एव साक्षात् ।

---

हलेश्वरदुहितुः सिंहलेश्वरनामा राजा तत्पुत्र्याः। समुद्रे प्रवहणभङ्गनिमग्नायाः प्रकृष्टं यद्वहनं तद्भङ्गो रचना तेन निम्नो गच्छति तस्याः। फलकासादनं काष्ठोपवेशनम्। तदवस्थायाः काष्ठसंलग्नायाः। संभावनं पालनमिति । **मयेति** । निक्षिपता दत्तवता । बाभ्रव्यो बाभ्रव्यनामा । धृतिं धैर्यम् । **प्रारम्भ इति** । वृद्धिरुपचयः । स्वेच्छाचारी स्वाभिलषिताचरणः । भीतो बिभेमीति ॥ ७ ॥ चर्चरी वाद्यविशेषः । मदनमहमहीयांसं कामोत्सवपूर्णम् । **विश्रान्तेति** । विग्रहः शरीरे कलहे च । प्रियवसन्तको मित्रवसन्तकः । वसन्त एव वसन्तक इत्युभयत्रा-

पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥ ८ ॥

(ऊर्ध्वमवलोक्य ।) अये, कथमधिरूढ एव देवः प्रासादम् । तद्यावद्गृहं गत्वा कार्यशेषं चिन्तयामि । (इति निष्क्रान्तः ।)

इति विष्कम्भकः ।

(ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेषो राजा विदूषकश्च ।)

**राजा**—(सहर्षमवलोक्य ।) सखे वसन्तक ।

**विदूषकः**—आणवेदु भवम् । (क)

**राजा**—

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥ ९ ॥

**विदूषकः**—(सहर्षम् ।) भो वअस्स, एव्वं णेदं । अहं उण जाणामि ण भवदो ण कामदेवस्स मम ज्जेव्व एक्कस्स बह्मणस्स अअं मअणमहूस्सवो जेण पिअवअस्सेण एव्वं मानीअदि । (विलोक्य) ता किं उण इमिणा । पेक्ख दाव इमस्स महुमत्तकामिणीजण-सअंगाहगहिदसिङ्गकजलप्पहारणच्चन्तणाअरजणजणिदकोदूहलस्स

---

(क) आज्ञापयतु भवान् ।

---

न्वय इति ॥ ८ ॥ **विदूषकः** । आज्ञापयतु भवान् । **राजा**—राज्य-मिति । न्यस्तः स्थापितः । भरो राज्यधूः । प्रद्योतस्य सुता वासवदत्ता-नाम्नी । नाम्ना गोत्रेणैव । धृतिं धैर्यम् ॥ ९ ॥ **विदूषकः** । भो वयस्य, एवं नेदम् । अहं पुनर्जानामि न भवतो न कामदेवस्य ममैवैकस्य ब्राह्मणस्या-मदनमहोत्सवो येन प्रियवयस्येनैवं मन्यते । तत्किं पुनरनेन । प्रेक्षस्व तावदेतस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृङ्गकजलप्रहारनृत्यन्नागरजन-

समन्तदो सुव्वत्तमद्दलुद्दामचच्चरीसद्दमुहररत्थासुहसोहिणो पइण्णपड-वासपुञ्जपिञ्जरिज्जन्ददिसामुहस्स सिरिअं मअणमहूस्सवस्स । (क)

**राजा**—(सहर्षं समन्तादवलोक्य ।) अहो, परां कोटिमधिरोहति प्रमोदः पौराणाम् । तथा हि ।

कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कमक्षोदगौरै-
हेमालंकारभाभिर्भरनमितशिरःशेखरैः कैङ्किरातैः ।
एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति ॥ १० ॥

अपि च ।

धारायन्त्रविमुक्तसंततपयःपूरप्लुते सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे क्षणं प्राङ्गणे ।
उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमम् ॥ ११ ॥

**विदूषकः**—(विलोक्य ।) एदं पि सुविअद्धजणजलभरिदसिङ्गक-

(क) भो वयस्य, एवं नेदम् । अहं पुनर्जानामि न भवतो न कामदेवस्य ममैवैकस्य ब्राह्मणस्यायं मदनमहोत्सवो येन प्रियवयस्येनैवं मन्यते । तत्किं पुनरनेन । प्रेक्षस्व तावदेतस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः सुवृत्तमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरीकृतदिशामुखस्य श्रियं मदनमहोत्सवस्य ।

जनितकौतूहलस्य समन्ततः सुवृत्तमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरीकृतदिशामुखस्य श्रियं मदनमहोत्सवस्य । मुखरः श्रावास्तं(?) । पटवासः सुगन्धिपाण्डरचूर्णम् । 'पिष्टातकः पटवासकम्' इति । **राजा—कीर्णैरिति** । कीर्णैर्व्याप्तैः । कृतदिवसमुखैराचरितदिवसमुखैरिवेति लुप्तोपमा । कैङ्किरातैः पीतपुष्पविशेषैः । एकपीता पीतवर्णप्रधाना । कौशाम्बी नगरी । एतैरिति शेषः ॥ १० ॥ **धारेति** । प्लुत आर्द्रीकृते । सान्द्रविमर्दकर्दमकृतक्रीडे सान्द्रो निबिडो विमर्दो जनसंकुलत्वं तेन कर्दमं च तत्कृतक्रीडं तस्मिन्निति ॥ ११ ॥ **विदूषकः** । एतदपि सुविदग्धजनजलभरितशृङ्गक-

जलप्पहारमुक्कसिक्कारमणोहरं वारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो । (क)

**राजा**—(विलोक्य ।) वयस्य, साधु दर्शितम् ।

अस्मिन्प्रकीर्णपटवासकृतान्धकारे
दृष्टो मनाङ्मणिविभूषणरश्मिजालैः ।
पातालमुद्यतफणाकृतिशृङ्गकोऽयं
मामद्य संस्मरयतीव भुजङ्गलोकः ॥ १२ ॥

**विदूषकः**—(विलोक्य ।) भो वअस्स, पेक्ख पेक्ख । एसा क्खु मअणिआ मअणवसविसण्ठुलं वसन्ताभिणअं णच्चन्ती चूदलदिआए सह इदो जेव्व आअच्छदि त्ति अवलोएदु पिअवअस्सो । (ख)

(ततः प्रविशतो मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ ।)

**मदनिका**—(गायति ।)

कुसुमाउहपिअदूअओ मउलीकिदबहुचूअओ ।
सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥ १३ ॥
विअसिअबउलासोअओ उक्कण्ठिअपिअमेलओ ।
पडिवालणअसमत्थओ तम्मइ जुवईसत्थओ ॥ १४ ॥

---

(क) एतदपि सुविदग्धजनजलभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः ।

(ख) भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एषा खलु मदनिका मदनवशविसंष्ठुलं वसन्ताभिनयं नृत्यन्ती चूतलतिकया सहेत एवागच्छतीत्यवलोकयतु प्रियवयस्यः ।

---

जलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः । **राजा—अस्मिन्निति** । पटवासः पिष्टातकः । पातालमिति व्यज्यते । भुजङ्गलोकः कुट्टिनीसमुदायः । शेषमुभयविशेषणमिति ॥ १२ ॥ **विदूषकः** । भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एषा खलु मदनिका मदनवशविसंष्ठुलं वसन्ताभिनयं नृत्यन्ती चूतलतिकया सहेत एवागच्छतीत्यवलोकयतु प्रियवयस्यः । द्विपदीखण्डं गानविशेषम् । **मदनिका** । कुसुमायुधप्रियदूतको मुकुलीकृतबहुचूतकः । शिथिलितमानग्रहणको वाजति दक्षिणपवनकः । वाजति वाति ॥ १३ ॥ विकसितबकुलाशोकक उत्कण्ठितप्रियमेलकः । प्रतिपालनासमर्थकस्ताम्यति युव-

अह वा ।

इह पढमं महुमासो जणस्स हिअआइं कुणइ मिउलाइं ।
पच्चा विद्धइ कामो लद्धप्पसरेहिं कुसुमबाणेहिं ॥ १५ ॥ (क)

**राजा**—(निर्वर्ण्य ।) अहो, मधुरोऽयमासां निर्भरः क्रीडारसः ।

तथा हि ।

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ १६ ॥

**विदूषकः**—भो वअस्स, अहं वि एदाणं वहूपरिजणाणं मग्गे णच्चन्तो मअणमहूस्सवं माणइस्सं । (ख)

---

(क) कुसुमायुधप्रियदूतको मुकुलीकृतबहुचूतकः ।
शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥
विकासितबकुलाशोककः उत्कण्ठितप्रियमेलकः ।
प्रतिपालनासमर्थकस्ताम्यति युवतीसार्थकः ॥

अथ वा ।

इह प्रथमं मधुमासो जनस्य हृदयानि कुरुते मृदुलानि ।
पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥

(ख) भो वयस्य, अहमप्येतेषां वधूपरिजनानां मार्गे नृत्यन्मदनमहोत्सवं मानयिष्ये ।

---

तिसार्थकः । वायुर्वात्यतो युवतिजनस्ताम्यति क्लिश्यतीत्यन्वयः ॥ १४ ॥ अथ वा । इह प्रथमं मधुमासो जनस्य हृदयानि कुरुते मृदुकराणि । पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः । लब्धप्रसरैर्लब्धावसरैरिति ॥ १५ ॥ **राजा—स्रस्त इति।** स्रग्दामशोभां स्रग्गुणशोभाम् । स्रक्च दाम च स्तन्ये । स्रक्पुष्पमाला, दाम केचिद्ग्रस्तगुम्फिता(?) । अनयोः शोभाम् । कर्म । पीडयेवाकुलः । पादलग्नौ चरणलग्नौ । व्यस्त इति सर्वत्रान्वय इति ॥ १६ ॥ **विदूषकः** । भो वयस्य, अहमप्येतेषां वधूपरि-

**राजा**—(सस्मितम्।) वयस्य, एवं क्रियताम्।

**विदूषकः**—जं भवं आणवेदि त्ति। (उत्थाय चेट्योर्मध्ये नृत्यति।) भोदि मअणिए, भोदि चूदलदिए, मं पि एदं चच्चरिअं सिक्खावेध। (क)

**मदनिका**—(विहस्य।) अरे हदास, ण एसा होदि चच्चरी।(ख)

**विदूषकः**—भोदि, किं क्खु एदं। (ग)

**मदनिका**—हदास, दुबदीखण्डं क्खु एदं। (घ)

**विदूषकः**—(सहर्षम्।) किं एदिणा खण्डेण मोअआ करीअन्ति। (ङ)

**मदनिका**—(विहस्य।) णहि णहि। पठीअदि क्खु एदं। (च)

**विदूषकः**—(सविषादम्।) जइ पठीअदि ता अलं एदिणा। वरं पिअवअस्सस्स ज्जेव्व सआसं गमिस्सम्। (गन्तुमिच्छति।) (छ)

---

(क) यद्भवानाज्ञापयतीति। भवति मदनिके, भवति चूतलतिके, मामप्येतच्चर्चरिकं शिक्षापयथ।

(ख) अरे हताश, नैषा भवति चर्चरी।

(ग) भवति, किं खल्वेतत्।

(घ) हताश, द्विपदीखण्डं खल्वेतत्।

(ङ) किमेतेन खण्डेन मोदकाः क्रियन्ते।

(च) नहि नहि। पठ्यते खल्वेतत्।

(छ) यदि पठ्यते तदलमनेन। वरं प्रियवयस्यस्यैव सकाशं गमिष्ये।

---

जनानां मार्गे नृत्यन्मदनमहोत्सवं मानयिष्ये। **विदूषकः**। यद्भवानाज्ञापयतीति। भवति मदनिके, भवति चूतलतिके, मामप्येतच्चर्चरिकं शिक्षापयथ। **मदनिका**। अरे हताश, नैषा भवति चर्चरी। **विदूषकः**। भवति, किं खल्वेतत्। **मदनिका**। हताश, द्विपदीखण्डं खल्वेतत्। **विदूषकः**। किमेतेन खण्डेन मोदकाः क्रियन्ते। **मदनिका**। नहि नहि। पठ्यते खल्वेतत्। **विदूषकः**।

**मदनिका**—(हस्तं गृहीत्वा ।) हदास, कहिं गच्छसि । इध एव्व कीलिस्सम् । (क)

**विदूषकः**—(हस्तमाकृष्य प्रपलाय्य राजानमुपसृत्य ।) वअस्स, णच्चिदोम्हि । णहि णहि । कीलिअ पलाइदोम्हि । (ख)

**चूतलतिका**—हञ्जे मअणिए, चिरं क्खु अम्हेहिं कीलिदम् । ता एहि । णिवेदेम्ह दाव भट्टिणीए संदेसं महाराअस्स । (ग)

**मदनिका**—एहि । त्वरम्ह । (घ)

**उभे**—(उपसृत्य ।) जेदु जेदु भट्टा । भट्टा, देवी आणवेदि—(इत्यर्धोक्ते लज्जां नाटयन्त्यौ ।) णहि णहि । विण्णवेदि । (ङ)

**राजा**—(सहर्षं विहस्य सादरम् ।) मदनिके, नन्वाज्ञापयतीत्येव रमणीयम् । विशेषतोऽद्य मदनमहोत्सवे । तत्कथय किमाज्ञापयति देवी ।

**विदूषकः**—आः दासीए धीए, किं देवी आणवेदि । (च)

---

(क) हताश, क्व गच्छसि । इहैव क्रीडावः ।

(ख) वयस्य, नर्तितोऽस्मि । नहि नहि । क्रीडित्वा पलायितोऽस्मि ।

(ग) हञ्जे मदनिके, चिरं खल्वावाभ्यां क्रीडितम् । तदेहि । निवेदयावस्तावद्भर्त्र्याः संदेशं महाराजस्य ।

(घ) एहि । त्वरावः ।

(ङ) जयतु जयतु भर्ता । भर्तः, देव्याज्ञापयति । नहि नहि । विज्ञापयति ।

(च) आः दास्याःपुत्रि, किं देव्याज्ञापयति ।

---

यदि पठ्यते तदलमनेन । वरं प्रियवयस्यस्यैव सकाशं गमिष्ये । **मदनिका** । हताश, क्व गच्छसि । इहैव क्रीडावः । **विदूषकः** । वयस्य, नर्तितोऽस्मि । नहि नहि । क्रीडित्वा पलायितोऽस्मि । **चूतलतिका** । हञ्जे मदनिके, चिरं खल्वस्माभिः क्रीडितम् । तदेहि । निवेदयावस्तावद्भर्त्र्याः संदेशं महाराजस्य । **मदनिका** । एहि । त्वरावः । **उभे** । जयतु जयतु भर्ता । भर्तः, देव्याज्ञापयति । नहि नहि । विज्ञापयति । **विदूषकः** । आः दास्याःपुत्रि, किं देव्याज्ञापयति ।

**चेट्यौ**—एवं देवी विण्णवेदि । क्खु अज्ज मए मअरन्दुज्जाणं गदुअ रत्तासोअपाअवदलसंट्ठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा । तहिं अज्जउत्तेण संणिहिदेण होदव्वम् ।(क)

**राजा**—(सानन्दम् ।) वयस्य, ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितमिति ।

**विदूषकः**—भो वअस्स, ता उट्ठेहि।तहिं ज्जेव्व गच्छम्ह । जेण तहिंगदस्स बम्हणबालअस्स मे सोत्थिवाअणं किंपि भविस्सदि । (ख)

**राजा**—मदनिके, गम्यतां देव्यै निवेदयितुम् । अयमहमागत एव मकरन्दोद्यानमिति ।

**चेट्यौ**—जं भट्टा आणवेदि । (इति निष्क्रान्ते ।) (ग)

**राजा**—वयस्य, आदेशय मकरन्दोद्यानस्य मार्गम् ।

**विदूषकः**—एदु एदु भट्टा । (घ)

(इति परिक्रामतः ।)

**विदूषकः**—(अग्रतोऽवलोक्य ।) एदं मअरन्दुज्जाणम् । ता एहि । पविसम्ह । (ङ)

(इति प्रविशतः ।)

---

(क) एवं देवी विज्ञापयति । खल्वद्य मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । तत्रार्यपुत्रेण संनिहितेन भवितव्यम् ।

(ख) भो वयस्य, तस्मादुत्तिष्ठ । तत्रैव गच्छावः । येन तत्रगतस्य ब्राह्मणबालकस्य मे स्वस्तिवाचनं किमपि भविष्यति ।

(ग) यद्भर्ताज्ञापयति ।

(घ) एत्वेतु भर्ता ।

(ङ) एतन्मकरन्दोद्यानम् । तदेहि । प्रविशावः ।

---

**चेट्यौ** । एवं देवी विज्ञापयति । खल्वद्य मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । तत्रार्यपुत्रेण संनिहितेन भवितव्यम् । **विदूषकः** । भो वयस्य, तस्मादुत्तिष्ठ । तत्रैव गच्छावः । येन तत्रगतस्य ब्राह्मणबालकस्य मे स्वस्तिवाचनं किमपि भविष्यति । **चेट्यौ** । यद्भर्ताज्ञापयति । **विदूषकः** । एत्वेतु भर्ता । **विदूषकः** । एतन्मकरन्दोद्यानम् । तदेहि ।

**विदूषकः**—(दृष्ट्वा । सविस्मयम् ।) भो महाराअ, पेक्ख दाव । एदं क्खु मलअमारुदान्दोलिदमउलन्तसहआरमञ्जरीरेणुपडलपडिबद्धपडवि-आणं मत्तमहुअरणिअरमुक्कझङ्कारमिलिदकोइलालाबसंगीदसुहावहं तुहागमणदंसिआअरं विअ मअरन्दुज्जाणं लक्खीअदि । ता पविसदु भवं । (क)

**राजा**—(समन्तादवलोक्य ।) अहो रम्यता मकरन्दोद्यानस्य । इह हि

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥१७॥

अपि च ।

मूले गण्डूषसेकासव इव बकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च रसितं निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः ॥ १८ ॥

---

(क) भो महाराज, प्रेक्षस्व तावत् । एतत्खलु मलयमारुतान्दोलितमुकुलायमानसहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकरनिकरमुक्तझङ्कारमिलितकोकिलालापसंगीतसुखावहं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते । तस्मात्प्रविशतु भवान् ।

---

प्रविशावः । **विदूषकः** । भो महाराज, प्रेक्षस्व तावत् । एतत्खलु मलयमारुतान्दोलितमुकुलायमानसहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं . मत्तमधुकरनिकरमुक्तझङ्कारमिलितकोकिलालापसंगीतसुखावहं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते । तस्मात्प्रविशतु भवान् । **राजा—उद्यदिति** । विद्रुमं प्रवालम् । भृङ्गाली भ्रमरपङ्क्तिः । कलैर्मञ्जुलैः । व्याहार उक्तिः । 'व्याहार उक्तिर्लपितम्' इत्यमरः । मधुप्रसङ्गं वसन्तप्रसङ्गम्, मदिराप्रसङ्गं वेति॥ १७॥ **मूल इति** । वास्यत उद्गीर्णवासं क्रियते । पादाहत्या चरणहननेन । रसितं शब्दितम् । केषांचिद्बकुलानां मूले गण्डूषासवसेकेनाशोकानां पादाहत्या विना न पुष्पकुलोत्पत्तिरिति हेतुः॥ १८॥

**विदूषकः**—(आकर्ण्य ।) भो वअस्स, ण एदे महुअरा णेउर सद्दं अणुहरन्तो । णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स । (क)

**राजा**—वयस्य, सम्यगवधारितम् ।

(ततः प्रविशति वासवदत्ता, काञ्चनमाला, गृहीतपूजोपकरणा सागरिका, विभवतश्च परिवारः ।)

**वासवदत्ता**—हञ्जे कञ्चणमाले, आदेसेहि मअरन्दुज्जाणस्स मग्गम् । (ख)

**काञ्चनमाला**—एदु एदु भट्टिणी । (ग)

**वासवदत्ता**—(परिक्रम्य ।) हञ्जे कञ्चणमाले, अध केत्तिअदूरे सो रत्तासोअपाअवो जहिं मए भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा । (घ)

**काञ्चनमाला**—भट्टिणि, आसण्णो ज्जेव्व किं ण पेक्खदि भट्टिणी । इअं क्खु सा णिरन्तरुब्भिण्णकुसुमसोहिणी भट्टिणीए पडिग्गहिदा माहवी लदा । एसा वि क्खु अवरा णोमालिआ लदा जाए अआलकुसुमुग्गमसद्धालुणा भट्टिणा अणुदिणं आआसी

---

(क) भो वयस्य, नैते मधुकरा नूपुरशब्दमनुहरन्ति । नूपुरशब्द एवैष देव्याः परिजनस्य ।

(ख) हञ्जे काञ्चनमाले, आदेशय मकरन्दोद्यानस्य मार्गम् ।

(ग) एत्वेतु भर्त्री ।

(घ) हञ्जे काञ्चनमाले, अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या ।

---

**विदूषकः**। भो वयस्य, नैते मधुकरा नूपुरशब्दमनुहरन्ति । नूपुरशब्द एवै देव्याः परिजनस्य । **वासवदत्ता**। हञ्जे काञ्चनमाले, आदेशय मकरन्दोद्यानस्य मार्गम् । **काञ्चनमाला**। एत्वेतु भर्त्री । **वासवदत्ता**। हञ्जे काञ्चनमाले, अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । **काञ्चनमाला**। भर्त्रि, आसन्न एव किं न प्रेक्षते भर्त्री । इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवी लता । एषापि

अदि अप्पा । ता एदं अदिक्कमिअ दीसदि ज्जेव्व सो रत्तासोअपाअवो जहिं देवी पूअं णिव्वत्तइस्सदि । (क)

**वासवदत्ता**—ता एहि । तहिं ज्जेव्व लहुं गच्छम्ह । (ख)

**काञ्चनमाला**—एदु एदु भट्टिणी । (ग)

(सर्वाः परिक्रामन्ति ।)

**वासवदत्ता**—अअं सो रत्तासोअपाअवो जहिं अहं पूअं णिव्वत्तइस्सम् । तेण हि मे पूआणिमित्ताइं उवअरणाइं उवणेहि । (घ)

**सागरिका**—(उपसृत्य ।) भट्टिणि, एदं सव्वं सज्जम् । (ङ)

**वासवदत्ता**—(निरूप्यात्मगतम् ।) अहो पमादो परिअणस्स । जस्स ज्जेव्व दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव्व दिट्ठिगोअरे

---

(क) भर्त्रि, आसन्न एव किं न प्रेक्षते भर्त्री । इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवी लता । एषापि खल्वपरा नवमालिका लता यस्या अकालकुसुमोद्गमश्रद्धालुना भर्त्रानुदिनमायास्यत आत्मा । तदेनामतिक्रम्य दृश्यत एव स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति ।

(ख) तदेहि । तत्रैव लघु गच्छावः ।

(ग) एत्वेतु भर्त्री ।

(घ) अयं स रक्ताशोकपादपो यत्राहं पूजां निर्वर्तयिष्यामि । तेन हि मे पूजानिमित्तान्युपकरणान्युपानय ।

(ङ) भर्त्रि, एतत्सर्वं सज्जम् ।

---

खल्वपरा नवमालिका लता यस्या अकालकुसुमोद्गमश्रद्धालुना भर्त्रानुदिनमायास्यत आत्मा । तदेनामतिक्रम्य दृश्यत एव स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति । **वासवदत्ता** । तदेहि । तत्रैव लघु गच्छावः । **काञ्चनमाला** । एत्वेतु भर्त्री । **वासवदत्ता** । अयं स रक्ताशोकपादपो यत्राहं पूजां निर्वर्तयिष्यामि । तेन हि मे पूजानिमित्तान्युपकरणान्युपानय । **सागरिका** । भर्त्रि, एतत्सर्वं सज्जं सिद्धम् । **वासवदत्ता** । अहो प्रमादः परिजनस्य । यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेदियम् । भवतु । एतत्तावद्ग-

पडिदा भवे इअम् । भोदु । एदं दाव भणिस्सम् । (प्रकाशम् ।) हञ्जे साअरिए, कीस तुमं अज्ज मअणमहूस्सवपरिहीणे परिअणे सारिअं उज्झिअ इह आअदा । ता तहिं ज्जेव्व लहुं गच्छ । एदं पि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहि । (क)

**सागरिका**—जं भट्टिणी आणवेदि त्ति । (तथा कृत्वा कतिचित्पदानि गत्वात्मगतम् ।) सारिआ उण मए सुसंगदाए हत्थे समप्पिदा । एदं पि अत्थि मे पेक्खिदुं कोदूहलम्, किं जहा तादस्स अन्तेउरे भअवं अणङ्गो अच्चीअदि, इध वि तह ज्जेव्व त्ति ण वे त्ति । ता अलक्खिआ भविअ पेक्खिस्सम् । (परिक्रम्यावलोक्य च ।) ता जाव इह पूआसमओ होदि ताव अहं पि भअवन्तं मअणं ज्जेव्व पूअइदुं कुसुमाइं अवचिणिस्सम् । (इति कुसुमावचयं नाटयति ।) (ख)

(क) अहो प्रमादः परिजनस्य । यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेदियम् । भवतु । एतत्तावद्भणिष्यामि । हञ्जे सागरिके, किमिति त्वमद्य मदनमहोत्सवपरिहीने परिजने सारिकामुज्झित्वेहागता । तस्मात्तत्रैव लघु गच्छ । एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय ।

(ख) यद्भर्त्र्याज्ञापयतीति । सारिका पुनर्मया सुसंगताया हस्ते समर्पिता । एतदप्यस्ति मे प्रेक्षितुं कुतूहलम्, किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, अत्रापि तथैवेति न वेति । तस्मादलक्षिता भूत्वा प्रेक्षिष्ये । तद्यावदिह पूजासमयो भवति तावदहमपि भगवन्तं मदनमेव पूजयितुं कुसुमान्यवचेष्यामि ।

णिष्यामि । हञ्जे सागरिके, किमिति त्वमद्य मदनमहोत्सवपरिहीने परिजने सारिकामुज्झित्वेहागता । तस्मात्तत्रैव लघु गच्छ । एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय । **सागरिका** । यद्भर्त्र्याज्ञापयतीति । सारिका पुनर्मया सुसंगताया हस्ते समर्पिता । एतदप्यस्ति मे प्रेक्षितुं कुतूहलम्, किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, अत्रापि तथैवेति न वेति । तस्मादलक्षिता भूत्वा प्रेक्षिष्ये । तद्यावदिह पूजासमयो भवति तावदहमपि भगवन्तं मदनमेव पूजयितुं कुसु-

**वासवदत्ता**—कञ्चणमाले, पडिट्ठावेहि असोअमूले भअवन्तं पज्जुण्णम् । (क)

**काञ्चनमाला**—जं भट्टिणी आण्णवेदि त्ति । (तथा करोति ।)(ख)

**विदूषकः**—(परिक्रम्यावलोक्य च ।) भो वअस्स, जधा वीसन्तो णेउरसद्दो तथा तक्केमि आअदा देवी असोअमूलं त्ति । (ग)

**राजा**—वयस्य, सम्यगवधारितम् । पश्येयं देवी । या किलैषा

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ १९ ॥

तदेहि । उपसर्पावः । (उपसृत्य ।) प्रिये वासवदत्ते ।

**वासवदत्ता**—(विलोक्य ।) कधं अज्जउत्तो । जअदु जअदु अज्जउत्तो । अलंकरेदु इमं देसं आसणपडिग्गहेण । एदं आसणम् । एत्थ उववसिदु अज्जउत्तो । (घ)

(राजा नाट्येनोपविशति ।)

**काञ्चनमाला**—भट्टिणी, सहत्थदिण्णेहिं कुसुमकुङ्कुमचन्दणवा-

---

(क) काञ्चनमाले, प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम् ।

(ख) यद्भर्त्र्याज्ञापयतीति ।

(ग) भो वयस्य, यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयाम्यागता देव्यशोकमूलमिति ।

(घ) कथमार्यपुत्रः । जयतु जयत्वार्यपुत्रः । अलंकरोत्विमं देशमासनपरिग्रहेण । एतदासनम् । अत्रोपविशत्वार्यपुत्रः ।

---

मान्यवचेष्यामि । **वासवदत्ता** । काञ्चनमाले, प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम् । **काञ्चनमाला** । यद्भर्त्र्याज्ञापयतीति । **विदूषकः** । भो वयस्य, यथा विश्रान्तो नूपूरशब्दस्तथा तर्कयाम्यागता देव्यशोकमूलमिति । **राजा—कुसु-मेति** । तनुतरमतिकृशम् । पार्श्वस्था विपरीतस्थापिता ॥ १९ ॥ **वास-वदत्ता** । कथमार्यपुत्रः । जयतु जयत्वार्यपुत्रः । अलंकरोत्विमं देशमासनपरिग्रहेण । एतदासनम् । अत्रोपविशत्वार्यपुत्रः । **काञ्चनमाला** । भर्त्रि, स्वहस्तदत्तैः

सेहिं सोहिदं कदुअ रत्तासोअपाअवं गदुअ अच्चीअदु भअवं पज्जुण्णो । (क)

**वासवदत्ता**—उवणेहि मे पूओवअरणाइं । (ख)

(काञ्चनमालोपनयति । वासवदत्ता तथा करोति ।)

**राजा**—प्रिये वासवदत्ते,

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव ॥ २० ॥

अपि च ।

स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ २१ ॥

अपि च ।

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥ २२ ॥

**काञ्चनमाला**—भट्टिणि, अच्चिदो भअवं पज्जुण्णो । ता करेहि भत्तुणो उइदं पूआसक्कारम् । (ग)

---

(क) भर्त्रि, स्वहस्तदत्तैः कुसुमकुङ्कुमचन्दनवासोभिः शोभितं कृत्वा रक्ताशोकपादपं गत्वार्च्यतां भगवान्प्रद्युम्नः ।

(ख) उपानय मे पूजोपकरणानि ।

(ग) भर्त्रि, अर्चितो भगवान्प्रद्युम्नः । तत्करोतु भर्तुरुचितं पूजासत्कारम् ।

---

कुसुमकुङ्कुमचन्दनवासोभिः शोभितं कृत्वा रक्ताशोकपादपं गत्वार्च्यतां भगवान्प्रद्युम्नः । **वासवदत्ता** । उपानय मे पूजोपकरणानि । **राजा—प्रत्यग्रेति** । प्रत्यग्रं नूतनम् । विविक्तं पवित्रम् । 'विविक्तं पूतविजने' इत्यमरः । बालप्रवालविटपिप्रभवाः बालप्रवालो बालाङ्कुशः । 'प्रवालमङ्कुरेऽप्यस्त्री' इत्यमरः । अथवा प्रवाल इव विद्रुमवदिति लुप्तोपमा॥२०॥**स्पृष्ट इति** । व्यापृतेन व्यासक्तेन हस्तेन कृत्वा लक्ष्यते इति तव स्पर्शेन काष्ठमपि साङ्कुरमिति व्यङ्ग्यम् ॥२१॥ **अनङ्ग इति** । अनङ्गत्वमङ्गाभावत्वम् । स्पर्शोत्सवः स्पर्शसंतोषः ॥२२॥ **काञ्चनमाला** । भर्त्रि,

**वासवदत्ता**—तेण हि उवणेहि मे कुसुमाइं विलेवणं च । (क)

**काञ्चनमाला**—भट्टिणि, एदं सव्वं सज्जम् । (ख)

(वासवदत्ता नाट्येन राजानं पूजयति ।)

**सागरिका**—(गृहीतकुसुमा ।) हद्धी हद्धी । कहं कुसुमलोहोक्खित्तहिअआए मए अदिचिरं किदम् । ता इमिणा सिन्दुवारविडवेण ओवारिअसरीरा भविअ पेक्खिस्सम् । (विलोक्य ।) कहं पेक्खिदो ज्जेव्व अपुव्वो कुसुमाउहो । अम्हाणं तादस्स अन्तेउरे चित्तगदो अच्चीअदि । इह पच्चक्खो लब्भीअदि । ता अहं पि इमेहिं कुसुमेहिं इह ट्ठिदा ज्जेव्व भअवन्तं कुसुमाउहं पूअइस्सम् । (इति कुसुमानि प्रक्षिपति ।) णमो दे भअवं कुसुमाउह, सुभदंसणो मे भविस्ससि । दिट्ठं जं दिट्ठव्वम् । अमोघदंसणो मे भविस्ससि ।(इति प्रणमति ।) अच्चरिअम् । दिट्ठो वि पुणो पेक्खिदव्वो । ता जाव ण को वि मं पेक्खदि दाव ज्जेव्व गमिस्सम् । (इति कतिचित्पदानि गच्छति ।) (ग)

---

(क) तेन ह्युपानय मे कुसुमानि विलेपनं च ।

(ख) भर्त्रि, एतत्सर्वं सज्जम् ।

(ग) हा धिक् हा धिक् । कथं कुसुमलोभोत्क्षिप्तहृदयया मयातिचिरं कृतम् । तस्मादनेन सिन्धुवारविटपेनापावृत्तशरीरा भूत्वा प्रेक्षिष्ये । कथं प्रेक्षित एवापूर्वः कुसुमायुधः । अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते । इह प्रत्यक्षो लभ्यते । तस्मादहमप्येतैः कुसुमैरिहस्थितैव भगवन्तं कुसुमायुधं पूजयिष्ये । नमस्ते भगवन्कुसुमायुध, शुभदर्शनो मे

---

अर्चितो भगवान्प्रद्युम्नः। तत्करोतु भर्तुरुचितं पूजासत्कारम्। **वासवदत्ता**। तेन ह्युपानय मे कुसुमानि विलेपनं च । **काञ्चनमाला** । भर्त्रि, एतत्सर्वं सज्जम् । **सागरिका**।हा धिक् हा धिक्। कथं कुसुमलोभोत्क्षिप्तहृदयया मयातिचिरं कृतम्। तस्मादनेन सिन्धुवारविटपेनापावृत्तशरीरा भूत्वा प्रेक्षिष्ये । कथं प्रेक्षित एवापूर्वः कुसुमायुधः । अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते। इह प्रत्यक्षो लभ्यते। तस्मादहमप्येतैः कुसुमैरिहस्थितैव भगवन्तं कुसुमायुधं पूजयिष्ये । नमस्ते भगवन्कुसुमायुध, शुभदर्शनो मे भविष्यसि । दृष्टं यद्द्रष्टव्यम् । अमोघदर्शनो मे

**काञ्चनमाला**—अज्ज वसन्तअ, एहि । संपदं तुमं पि सोत्थिवाअणिअं पडिच्छेहि । (क)

(विदूषक उपसर्पति ।)

**वासवदत्ता**—(विलेपनकुसुमाभरणदानपूर्वकम् ।) अज्ज, एदं तं सोत्थिवाअणिअं पडिच्छेहि । (इत्यर्पयति ।) (ख)

**विदूषकः**—(सहर्षं गृहीत्वा ।) सोत्थि भोदीए । (ग)

(नेपथ्ये वैतालिकः पठति ।)

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायंतने संपतन् ।
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ २३ ॥

**सागरिका**—(श्रुत्वा सहर्षं परिवृत्य राजानं दृष्ट्वा सस्पृहम् ।) कहं अअं सो राआ उअअणो जस्स अहं तादेण दिण्णा । (दीर्घं निश्वस्य ।) ता परपोसणदूसिदं वि मे सरीरं एदस्स दंसणेण अज्ज बहुमदं संवुत्तम् । (घ)

---

भविष्यसि । दृष्टं यद्द्रष्टव्यम् । अमोघदर्शनो मे भविष्यसि । आश्चर्यम् । दृष्टोऽपि पुनः प्रेक्षितव्यः । तद्यावन्न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि ।

(क) आर्य वसन्तक, एहि । सांप्रतं त्वमपि स्वस्तिवाचनिकं प्रतीच्छ ।

(ख) आर्य, इदं तत्स्वस्तिवाचनिकं प्रतीच्छ ।

(ग) स्वस्ति भवत्यै ।

(घ) कथमयं स राजोदयनो यस्याहं तातेन दत्ता । तस्मात्परपोषणदूषितमपि मे शरीरमेतस्य दर्शनेनाद्य बहुमतं संवृत्तम् ।

---

भविष्यसि । आश्चर्यम् । दृष्टोऽपि पुनः प्रेक्षितव्यः । तद्यावन्न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि । **काञ्चनमाला** । आर्य वसन्तक, एहि । सांप्रतं त्वमपि स्वस्तिवाचनिकं प्रतीच्छ । **वासवदत्ता** । आर्य, इदं तत्स्वस्तिवाचनिकं प्रतीच्छ । **विदूषकः** । स्वस्ति भवत्यै । **वैतालिकः—अस्तेति** । आस्थानीं सभागृहम् । पादांश्चरणान्, चरणौ वा । उदयनस्योदयं प्राप्तस्य ॥२३॥ **सागरिका** । क-

राजा—कथमुत्सवापहृतचेतोभिः संध्यातिक्रमोऽप्यस्माभिर्नोपलक्षितः । देवि, पश्य ।

उदयतटान्तरितमियं प्राची सूचयति दिङ् निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ २४ ॥

देवि, तदुत्तिष्ठावः । आवासाभ्यन्तरमेव प्रविशावः ।

(सर्वे उत्थाय परिक्रामन्ति ।)

सागरिका—कधं पत्थिदा देवी । भोदु । ता अहं वि तुरिआ गमिस्सम् । (राजानं सस्पृहं दृष्ट्वा निश्वस्य च ।) हद्धी । मए मन्दभाइणीए पेक्खिदुं वि चिरं ण पारिदो अअं जणो । (इति निष्कान्ता ।) (क)

राजा—(परिक्रामन् ।)

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥ २५ ॥

(इति निष्क्रान्ताः सर्वे ।)

## इति प्रथमोऽङ्कः ।

---

(क) कथं प्रस्थिता देवी । भवतु । तदहमपि त्वरिता गमिष्यामि । हा धिक् । मया मन्दभागिन्या प्रेक्षितुमपि चिरं न पारितोऽयं जनः ।

---

थमयं स राजोदयनो यस्याहं तातेन दत्ता । तस्मात्परपोषणदूषितमपि मे शरीरमेतस्य दर्शनेनाद्य बहुमतं संवृत्तम् । **राजा—उदयेति** । दिङ्मुखेन सूचयति । तटान्तरितमाच्छादितम् । विरहिणां हृदयंगोप्यं श्वेतमुखेन सूच्यते यथेति॥ २४॥**सागरिका** । कथं प्रस्थिता देवी । भवतु । तदहमपि त्वरिता गमिष्यामि । हा धिक् । मया मन्दभागिन्या प्रेक्षितुमपि चिरं न पारितोऽयं जनः । **राजा—देवीति** । तिरस्कारिणा लज्जाकारिणा । भृङ्गाङ्गना भ्रमरस्त्री ॥ २५ ॥ इति प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः ।

(ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसंगता ।)

**सुसंगता**—हद्धी हद्धी । अह कहिं दाणिं मम हत्थे इमं सारिअं णिक्खिविअ गदा मे पिअसही साअरिआ भविस्सदि । (अन्यतो दृष्ट्वा ।) एसा क्खु णिउणिआ इध ज्जेव्व आअच्छदि । ता जाव एदं पुच्छिस्सम् । (क)

(ततः प्रविशति निपुणिका ।)

**निपुणिका**—उअलद्धो मए भट्टिणो वुत्तन्तो । ता जाव गदुअ भट्टिणीए णिवेदेमि । (इति परिक्रामति ।) (ख)

**सुसंगता**—हला णिउणिए, तुमं कहिं दाणिं विम्हओक्खित्तहिअआ विअ इहट्ठिदं मं अवहीरिअ कुदो अदिक्कमसि । (ग)

**निपुणिका**—कधं सुसंगदा । हला सुसंगदे, सुट्ठु तुए जाणिदम् । एदं क्खु विम्हअस्स काअणम् । अज्ज किल भट्टा सिरिपव्वदादो आअदस्स सिरिखण्डदासणामहेअस्स धम्मिअस्स सआ-

---

(क) हा धिक् हा धिक् । अथ कुत्रेदानीं मम हस्त इमां सारिकां निक्षिप्य गता मे प्रियसखी सागरिका भविष्यति । एषा खलु निपुणिकेत एवागच्छति । तद्यावदेनां प्रक्ष्यामि ।

(ख) उपलब्धो मया भर्तुर्वृत्तान्तः । तद्यावद्गत्वा भर्त्र्यै निवेदयामि ।

(ग) हला निपुणिके, त्वं कुत्रेदानीं विस्मयोत्क्षिप्तहृदयेवेहस्थितां मामवधीर्य कुतोऽतिक्रामसि ।

---

**सुसंगता** । हा धिक् हा धिक् । अथ कुत्रेदानीं मम हस्त इमां सारिकां निक्षिप्य गता मे प्रियसखी सागरिका भविष्यति । एषा खलु निपुणिकेत एवागच्छति । तद्यावदेनां प्रक्ष्यामि । **निपुणिका** । उपलब्धो मया भर्तुर्वृत्तान्तः । तद्यावद्गत्वा भर्त्र्यै निवेदयामि । **सुसंगता** । हला निपुणिके, त्वं कुत्रेदानीं विस्मयोत्क्षिप्तहृदयेवेहस्थितां मामवधीर्य कुतोऽतिक्रामसि । **निपुणिका** । कथं सुसंगता । हला सुसंगते, सुष्ठु त्वया ज्ञातम् । एतत्खलु विस्मयस्य कारणम् ।

सादो अआलकुसुमसंजणणदोहअं सिक्खिअ अत्तणो पडिग्गहिदं णोमालिअं कुसुमसमिद्धिसोहिअं करिस्सदि त्ति । तहिं एदं वुत्तन्तं जाणिदुं देवीए पेसिदह्मि । तुमं उण कहिं पत्थिदा । (घ)

**सुसंगता**—पिअसहीं साअरिआं अण्णेसिदुम् । (क)

**निपुणिका**—दिट्ठा मए दे पिअसही साअरिआ गहीदसमुग्गअचित्तफलअवट्टिआ समुव्विग्गा विअ कअलीघरं पविसन्ती । ता गच्छ पिअसहीम् । अहं वि देवीसआसं गमिस्सम् । (ख)

(इति निष्क्रान्ते ।)

**इति प्रवेशकः ।**

---

(ततः प्रविशति गृहीतचित्रफलकवर्तिका मदनावस्थां नाटयन्ती सागरिका ।)

**सागरिका**—हिअअ, पसीद पसीद । किं इमिणा आआस-

---

(घ) कथं सुसंगता । हला सुसंगते, सुष्ठु त्वया ज्ञातम् । एतत्खलु विस्मयस्य कारणम् । अद्य किल भर्ता श्रीपर्वतादागतस्य श्रीखण्डदासनामधेयस्य धार्मिकस्य सकाशादकालकुसुमसंजननदोहदं शिक्षित्वात्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति । तत्रैतद्वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि । त्वं पुनः कुत्र प्रस्थिता ।

(क) प्रियसखीं सागरिकामन्वेषितुम् ।

(ख) दृष्टा मया तव प्रियसखी सागरिका गृहीतसमुद्गकचित्रफलकवर्तिका समुद्विग्नेव कदलीगृहं प्रविशन्ती । तद्गच्छ प्रियसखीम् । अहमपि देवीसकाशं गमिष्यामि ।

---

अद्य किल भर्ता श्रीपर्वतादागतस्य श्रीखण्डदासनामधेयस्य धार्मिकस्य सकाशादकालकुसुमसंजननदोहदं शिक्षित्वात्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति । तत्रैतद्वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि । त्वं पुनः कुत्र प्रस्थिता । **सुसंगता** । प्रियसखीं सागरिकामन्वेषितुम् । **निपुणिका** । दृष्टा मया तव प्रियसखी सागरिका गृहीतसमुद्गकचित्रफलकवर्तिका समुद्विग्नेव कदलीगृहं प्रविशन्ती । तद्गच्छ प्रियसखीम् । अहमपि देवीसकाशं गमिष्यामि । **सागरिका** । हृदय, प्रसीद प्रसीद । किममुना-

मेत्तफलएण दुल्लहजणप्पत्थणाणुबन्धेण । अण्णं च । जेण एव्व दि-
ट्ठेण मे ईदिसो संदावो णं वड्ढदि । (सविस्मयम् ।) पुणो वि तं जेव्व
पेक्खिदुं अहिलससि त्ति अहो दे मूढदा। अइ णिसंस हिअअ, ज-
म्मदो पहुदि सह संव्वड्ढिअ इमं जणं परिच्चइअ क्खणमेत्तदंसणप-
रिचिदं जणं अणुगच्छन्तो कधं ण लज्जेसि। अहवा को तुह दोसो।
अनङ्गसरपडणभीदेण तुए अज्ज व्ववसिदम् । भोदु दाव । अणङ्ग
उवालहिस्सम् ।(साम्रमञ्जलिं बद्ध्वा जानुभ्यां स्थित्वा ।)भअवं कुसुमाउह,
णिज्जिदसअलसुरासुरो भविअ इत्थिआजणं पहरन्तो कहं ण लज्जे-
सि । (विचिन्त्य ।) अहवा अणङ्गो सि । सव्वधा मम मन्दभाइणीए
इमिणा दुण्णिमित्तेण मरणं एव्व उवट्ठिदम् । (फलकमवलोक्य ।) ता
जाव इह को वि ण आअच्छदि दाव जेव्व आलेक्खसमप्पिदं तं अ-
भिमदं जणं पेक्खिअ जहासमीहिदं करिस्सम् । (सावष्टम्भमेकमना
भूत्वा नाट्येन फलकं गृहीत्वा निश्वस्य ।) जइ वि मे अदिसद्धसेण वेवदि
अअं अतिमेत्तं अग्गहत्थो तह वि तस्स जणस्स अण्णो दंसणोवाओ
णत्थि त्ति । ता जहातहा आलिहिअ णं पेक्खिस्सम् । (इति नाट्येन
लिखति ।) (ग)

---

(ग) हृदय, प्रसीद प्रसीद । किममुनायासमात्रफलकेन दुर्लभ-
जनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन म एतादृशः संतापो ननु

---

यासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन म एता-
दृशः संतापो ननु वर्धते । पुनरपि तमेव प्रेक्षितुमभिलषसीत्यहो ते मूढता।
अयि नृशंस हृदय, जन्मतः प्रभृति सह संवर्ध्येमं जनं परित्यज्य क्षणमात्रदर्शन-
परिचितं जनमनुगच्छन्कथं न लज्जसे । अथवा कस्तव दोषः । अनङ्गशरपतनभी-
तेन त्वयाद्य व्यवसितम् । भवतु तावत् । अनङ्गमुपालप्स्ये । भगव-
न्कुसुमायुध, निर्जितसकलसुरासुरो भूत्वा स्त्रीजनं प्रहरन्कथं न लज्जसे । अ-
थवानङ्गोऽसि । सर्वथा मम मन्दभागिन्या अनेन दुर्निमित्तेन मरण-
मेवोपस्थितम् । तद्यावदिह कोऽपि नागच्छति तावदेवालेख्यसमर्पितं तमभि-
मतं जनं प्रेक्ष्य यथासमीहितं करिष्ये । यद्यपि मेऽतिसाध्वसेन वेपतेऽयमति-
मात्रमग्रहस्तस्तथापि तस्य जनस्यान्यो दर्शनोपायो नास्तीति । तस्माद्यथातथा-

(ततः प्रविशति सुसंगता ।)

**सुसंगता**—एदं क्खु कअलीघरम् । ता जाव पविसामि । (प्रविश्यावलोक्य च सविस्मयम् ।) एसा मे पिअसही साअरिआ । किं उण एसा गुरुआणुराओक्खित्तहिअआ किं पि आलिहन्ती ण मं पेक्खदि । भोदु । ता जाव दिट्ठिवहं से परिहरिअ णिरूवइस्सं किं एसा आलिहदि त्ति । (स्वैरं पृष्ठतोऽस्याः स्थित्वा दृष्ट्वा सहर्षम् ।) कहं भट्टा आलिहिदो । साहु पिअसहि, साहु । अहवा ण कमलाअरं उज्झिअ राअहंसी अण्णहिं अहिरमदि । (क)

---

वर्धते । पुनरपि तमेव प्रेक्षितुमभिलषसीत्यहो ते मूढता । अयि नृशंस हृदय, जन्मतः प्रभृति सह संवर्ध्येमं जनं परित्यज्य क्षणमात्रदर्शन-परिचितं जनमनुगच्छन्कथं न लज्जसे । अथवा कस्तव दोषः । अनङ्गशर-पतनभीतेन त्वयाद्य व्यवसितम् । भवतु तावत् । अनङ्गमुपालप्स्ये । भगवन्कुसुमायुध, निर्जितसकलसुरासुरो भूत्वा स्त्रीजनं प्रहरन्कथं न लज्जसे । अथवानङ्गोऽसि । सर्वथा मम मन्दभागिन्या अनेन दुर्नि-मित्तेन मरणमेवोपस्थितम् । तद्यावदिह कोऽपि नागच्छति ता-वदेवालेख्यसमर्पितं तमभिमतं जनं प्रेक्ष्य यथासमीहितं करिष्ये । यद्यपि मेऽतिसाध्वसेन वेपतेऽयमतिमात्रमग्रहस्तस्तथापि तस्य जनस्यान्यो दर्शनोपायो नास्तीति । तस्माद्यथातथालिख्यैनं प्रेक्षिष्ये ।

(क) एतत्खलु कदलीगृहम् । तद्यावत्प्रविशामि । एषा मे प्रिय-सखी सागरिका । किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया किमप्यालिखन्ती न मां पश्यति । भवतु । तद्यावद्दृष्टिपथमस्याः परिहार्य निरूपयिष्ये कि-मेषालिखतीति । कथं भर्तालिखितः । साधु प्रियसखि, साधु । अथवा न कमलाकरमुज्झित्वा राजहंस्यन्यत्राभिरमते ।

---

लिख्यैनं प्रेक्षिष्ये । **सुसंगता** । एतत्खलु कदलीगृहम् । तद्यावत्प्रविशामि । एषा मे प्रियसखी सागरिका । किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया किमप्यालिखन्ती न मां पश्यति । भवतु । तद्यावद्दृष्टिपथमस्याः परिहार्य निरूपयिष्ये किमेषालि-खतीति । कथं भर्तालिखितः । साधु प्रियसखि, साधु । अथवा न कमलाकरमु-

**सागरिका**—(सबाष्पम् ।) आलिहिदो मए अअम् । किं उण णिवडन्तवाहसलिलेण मे दिट्ठी पेक्खिदुं ण प्पहवदि (मुखमुत्तानीकृत्याश्रूणि निवारयन्ती सुसंगतां दृष्ट्वोत्तरीयेण फलकं प्रच्छादयन्ती स्मितं कृत्वा ।) कहं पिअसही सुसंगदा । (इत्युत्थाय हस्ते गृहीत्वा ।) सहि सुसंगदे, एत्थ उवविस । (क)

**सुसंगता**—(उपविश्य बलात्फलकमाकृष्य दृष्ट्वा च ।) सहि, को एसो तुए आलिहिदो । (ख)

**सागरिका**—(सलज्जम् ।) पउत्तमअणमहूस्सवे भअवं अणङ्गो । (ग)

**सुसंगता**—(सस्मितम् ।) अहो दे णिउणत्तणम् । किं उण सुण्णं विअ चित्तं पडिभादि । ता अहं पि आलिहिअ रइसणाहं करिस्सम् । (वर्तिकां गृहीत्वा नाट्येन रतिव्यपदेशेन सागरिकामालिखति ।) (घ)

**सागरिका**—(विलोक्य सक्रोधम् ।) सहि, कीस तुए एत्थ अहं आलिहिदा । (ङ)

---

(क) आलिखितो मयायम् । किं पुनर्निपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति । कथं प्रियसखी सुसंगता । सखि सुसंगते, अत्रोपविश ।

(ख) सखि, क एष त्वयालिखितः ।

(ग) प्रवृत्तमदनमहोत्सवे भगवाननङ्गः ।

(घ) अहो ते निपुणत्वम् । किं पुनः शून्यमिव चित्रं प्रतिभाति । तस्मादहमप्यालिख्य रतिसनाथं करिष्ये ।

(ङ) सखि, किमिति त्वयात्राहमालिखिता ।

---

ज्झित्वा राजहंस्यन्यत्राभिरमते । **सागरिका** । आलिखितो मयायम् । किं पुनर्निपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति । कथं प्रियसखी सुसंगता । सखि सुसंगते, अत्रोपविश । **सुसंगता** । सखि, क एष त्वयालिखितः । **सागरिका** । प्रवृत्तमदनमहोत्सवे भगवाननङ्गः । **सुसंगता** । अहो ते निपुणत्वम् । किं पुनः शून्यमिव चित्रं प्रतिभाति । तस्मादहमप्यालिख्य रतिसनाथं करिष्ये । **सागरिका** । सखि, किमिति त्वयात्राहमालिखिता । **सुसं**

**सुसंगता**—(विहस्य ।) सहि, किं अआरणे कुप्पसि । जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदा । ता अ-ण्णधासंभाविणि, किं तुह एदिणा आलविदेण । कहेहि सव्वं वुत्तन्तम् । (क)

**सागरिका**—(सलज्जा स्वगतम् ।) णं जाणिदम्हि पिअसहीए । (प्रकाशम् ।) पिअसहि, महदी क्खु मे लज्जा । ता तहा करेसु जहा ण कोऽवि अवरो एदं वुत्तन्तं जाणादि त्ति । (ख)

**सुसंगता**—सहि, मा लज्ज । ईदिसस्स कण्णारअणस्स अ-वस्सं एव्व ईदिसे वरे अहिलासेण होदव्वम् । तह वि जहा ण को वि अवरो एदं वुत्तन्तं जाणिस्सदि तह करेमि । एदाए उण मेधाविणीए सारिआए एत्थ काअणेण होदव्वम् । कदाचि एसा इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मन्तइस्सदि । (ग)

---

(क) सखि, किमकारणे कुप्यसि । यादृशस्त्वया कामदेव आ-लिखितस्तादृशी मया रतिरालिखिता । तस्मादन्यथासंभाविनि, किं त-वैतेनालपितेन । कथय सर्वं वृत्तान्तम् ।

(ख) ननु ज्ञातास्मि प्रियसख्या । प्रियसखि, महती खलु मे लज्जा । तस्मात्तथा कुरुष्व यथा न कोऽप्यपर एतद्वृत्तान्तं जानातीति ।

(ग) सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरे-ऽभिलाषेण भवितव्यम् । तथापि यथा न कोऽप्यपर एतद्वृत्तान्तं ज्ञास्यति तथा करोमि । एतया पुनर्मेधाविन्या सारिकयात्र कारणेन भवितव्यम् । कदाचिदेषास्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति ।

---

**गता** । सखि, किमकारणे कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्ता-दृशी मया रतिरालिखिता । तस्मादन्यथासंभाविनि, किं तवैतेनालपितेन । कथय सर्वं वृत्तान्तम् । **सागरिका** । ननु ज्ञातास्मि प्रियसख्या । प्रियसखि, महती खलु मे लज्जा । तस्मात्तथा कुरुष्व यथा न कोऽप्यपर एतद्वृत्तान्तं जानातीति । **सुसंगता** । सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलाषेण

**सागरिका**—(सोद्वेगम् ।) सहि, अदो वि मे अधिअदरं संदावो वट्टदि । (इति मदनावस्थां नाटयति ।) (क)

**सुसंगता**—(सागरिकाया हृदये हस्तं दत्त्वा ।) सहि, समस्सस समस्सस । जाव इमाए दिग्घिआए णलिणीपत्ताइं मुणालिआ अ गेण्हिअ लहुं आअच्छामि । (निष्क्रम्य पुनः प्रविश्य च नाट्येन नलिनीपत्रैः शयनीयं मृणालवलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति ।) (ख)

**सागरिका**—सहि, अवणेहि इमाइं णलिणीपत्ताइं मुणालिआइं च । अलं एदिणा । कीस अआरणे अत्ताणं आआसेसि ।

दुल्लहजणअणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पिअसहि विसमं प्पेम्मं मरणं सरणं णु वरमेक्कम् ॥ १२ ॥

(इति मूर्च्छति ।) (ग)

---

(क) सखि, अतोऽपि मेऽधिकतरं संतापो वर्तते ।

(ख) सखि, समाश्वसिहि समाश्वसिहि । यावदेतस्या दीर्घिकाया नलिनीपत्राणि मृणालिकां च गृहीत्वा लघ्वागच्छामि ।

(ग) सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । किमिस्यकारण आत्मानमायासयसि ।

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम् ॥

---

भवितव्यम् । तथापि-यथा न कोऽप्यपर एतद्वृत्तान्तं ज्ञास्यति तथा करोमि । एतया पुनर्मेधाविन्या सारिकयात्र कारणेन भवितव्यम् । कदाचिदेषालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति । **सागरिका** । सखि, अतोऽपि मेऽधिकतरं संतापो वर्तते । **सुसंगता** । सखि, समाश्वसिहि समाश्वसिहि । यावदेतस्या दीर्घिकाया नलिनीपत्राणि मृणालिकां च गृहीत्वा लघ्वागच्छामि । **सागरिका** । सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । किमित्यकारण आत्मानमायासयसि । दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।

**सुसंगता**—(सकरुणम्।) पिअसहि साअरिए, समस्सस समस्सस। (क)

(नेपथ्ये कलकलः।)

कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्ष-
न्क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः॥ २॥

अपि च।

नष्टं वर्षधरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः॥ ३॥

**सुसंगता**—(आकर्ण्याग्रतोऽवलोक्य ससंभ्रममुत्थाय सागरिकां हस्ते गृहीत्वा।) सहि, उट्ठेहि उट्ठेहि। एसो क्खु दुट्ठवाणरो इदो ज्जेव्व आअच्छदि। (ख)

**सागरिका**—किं दाणिं करेह्म। (ग)

**सुसंगता**—एहि। इमस्सिं तमालविडवान्धआरे पविसिअ एदं अदिवाहेह्म। (घ)

(परिक्रम्योभे सभयं पश्यन्त्यावेकान्ते पर्यवस्थिते।)

---

(क) प्रियसखि सागरिके, समाश्वसिहि समाश्वसिहि।
(ख) सखि, उत्तिष्ठोत्तिष्ठ। एष खलु दुष्टवानर इत एवागच्छति।
(ग) किमिदानीं करिष्ये।
(घ) एहि। एतस्मिंस्तमालविटपान्धकारे प्रविश्यैनमतिवाहयामः।

---

प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम्॥ १॥ **सुसंगता**। प्रियसखि सागरिके, समाश्वसिहि समाश्वसिहि। **कण्ठ इति**। कृत्तावशेषं त्रुटितशेषम्। चक्रवालं मण्डलम्। 'चक्रवालं तु मण्डलम्' इत्यमरः। आतङ्को भयम्। सरणिर्मार्गम्। 'सरणिः पद्धतिः पद्या' इत्यमरः। संभ्रमाद्भयात्। मन्दुराश्वशाला। 'वाजिशाला तु मन्दुरा' इत्यमरः॥२॥ **नष्टमिति**। वर्षधरैः सौविदल्लैः। 'वण्टो वर्षधरस्तुल्यौ' इत्यमरः॥३॥ **सुसंगता**। सखि, उत्तिष्ठोत्तिष्ठ। एष खलु दुष्टवानर इत एवागच्छति। **सागरिका**। किमिदानीं करिष्ये। **सुसंगता**। एहि।

**सागरिका**—सुसंगदे, कहिं तुए चित्तफलओ उज्झि
कदाचि को वि तं पेक्खदि । (क)

**सुसंगता**—अइ सुत्थिदे, किं अज्ज वि चित्तफलएण
स्ससि । एसो दधिभत्तलम्पडो सारिआए पञ्जरं उग्घ
दुट्ठवाणरो णिक्कन्तो । एसा क्खु मेहाविणी उड्डीणा अ
गच्छदि । ता एहि । लहुं अणुसरेह्म । इमस्स आलावस्स
क्खरा कस्स वि पुरदो मन्तइस्सदि । (ख)

**सागरिका**—सहि, एव्वं करेह्म । (ग)

(इति परिक्रामतः ।)

(नेपथ्ये ।)

ही ही । अच्चरिअं अच्चरिअम् । (घ)

---

(क) सुसंगते, कुत्र त्वया चित्रफलक उज्झितः । कदाचित्को
तं प्रेक्षति ।

(ख) अयि सुस्थिते, किमद्यापि चित्रफलकेन करिष्यसि । ए
धिभक्तलम्पटः सारिकायाः पञ्जरमुद्घाट्य दुष्टवानरो निष्क्रान्तः
खलु मेधाविन्युड्डीनान्यतो गच्छति । तदेहि । लघ्वनुसरावः ।
स्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति ।

(ग) सखि, एवं कुर्वः ।

(घ) ही ही । आश्चर्यमाश्चर्यम् ।

---

एतस्मिंस्तमालविटपान्धकारे प्रविश्यैनमतिवाहयामः । **सागरिका** ।
गते, कुत्र त्वया चित्रफलक उज्झितः । कदाचित्कोऽपि तं प्रेक्षति । **सुसं**
अयि सुस्थिते, किमद्यापि चित्रफलकेन करिष्यसि । एष दधिभक्तलम्पटः
कायाः पञ्जरमुद्घाट्य दुष्टवानरो निष्क्रान्तः । एषा खलु मेधाविन्युड्डीयान्य
च्छति । तदेहि । लघ्वनुसरावः । एतस्यालापस्य गृहीताक्षरा कस्यापि पुरतो म
ष्यति । **सागरिका** । सखि, एवं कुर्वः । **नेपथ्ये** । ही ही हास्ये । आश्च

**सागरिका**—(विलोक्य ।) सुसंगदे, जाणीअदि कहं पुणो वि [illegible]ो दुट्ठवाणरो ज्जेव्व आअच्छदि । (क)

**सुसंगता**—(दृष्ट्वा विहस्य ।) अइ काअरे, ण भेहि । भट्टिणो [illegible]रिवा[illegible]वत्ती क्खु एसो अज्जवसन्तओ । (ख)

(ततः प्रविशति वसन्तकः ।)

**वसन्तकः**—ही ही । अच्चरिअं अच्चरिअम् । साहु रे सिरि-[illegible]ण्डदास धम्मिअ, साहु । (ग)

**सागरिका**—(सस्पृहमवलोक्य ।) सहि सुसंगदे, दंसणीओ क्खु [illegible]अं जणो । (घ)

**सुसंगता**—सहि, किं एदिणा दिट्ठेण । दूरीभूदा क्खु सा-रिआ । ता एहि । अणुसरेह्म । (ङ)

(इति निष्क्रान्ते ।)

**वसन्तकः**—साहु रे सिरिखण्डदास धम्मिअ, साहु । जेण दिण्णमेत्तेण ज्जेव्व तेण दोहअएण ईदिसी णोमालिआ संवुत्ता । जेण

---

(क) सुसंगते, ज्ञायते कथं पुनरप्येष दुष्टवानर एवागच्छति ।

(ख) अयि कातरे, न बिभेहि । भर्तुः परिपार्श्ववर्ती खल्वेष आ-र्यवसन्तकः ।

(ग) ही ही । आश्चर्यमाश्चर्यम् । साधु रे श्रीखण्डदास धार्मिक, साधु ।

(घ) सखि सुसंगते, दर्शनीयः खल्वयं जनः ।

(ङ) सखि, किमेतेन दृष्टेन । दूरीभूता खलु सारिका । तदेहि । अनुसरावः ।

---

[illegible]श्चर्यम् । **सागरिका** । सुसंगते, ज्ञायते कथं पुनरप्येष दुष्टवानर एवागच्छति । **सुसंगता** । अयि कातरे, न बिभेहि । भर्तुः परिपार्श्ववर्ती खल्वेष आर्यवसन्तकः । **वसन्तकः** । ही ही । आश्चर्यमाश्चर्यम् । साधु रे श्रीखण्डदास धार्मिक, साधु । **सागरिका** । सखि सुसंगते, दर्शनीयः खल्वयं जनः । **सुसंगता** । सखि, कि-मेतेन दृष्टेन । दूरीभूता खलु सारिका । तदेहि । अनुसरावः । **वसन्तकः** । साधु रे श्रीखण्डदास धार्मिक, साधु । येन दत्तमात्रेणैव तेन दोहदकेनेदृशी नवमा-

णिरन्तरुब्भिण्णकुसुमगुच्छाच्छादिअविडवा उवहसन्ती विअ लक्खीअदि देवीपरिगहिदा माहवीलदा । ता जाव गदुअ पिअवअस्सस्स णिवेदेमि । (परिक्रम्यावलोक्य च ।) एसो क्खु पिअवअस्सो तस्स दोहदस्स लद्धपच्चअदाए परोक्खं वि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो हरिसुप्फुल्ललोअणो इदो एव्व आअच्छदि । ता जाव णं उवसप्पामि । (इति राजानं प्रति निर्गतः ।) (क)

(ततः प्रविशति यथानिर्दिष्टो राजा ।)

**राजा**—(सहर्षम् ।)

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ ४ ॥

**विदूषकः**—(सहसोपसृत्य ।) जअदु जअदु पिअवअस्सो । भो वअस्स, दिट्ठिआ वड्ढसि । ('जेण दिण्णमेत्तेण' इति पुनः पठति ।) (ख)

---

(क) साधु रे श्रीखण्डदास धार्मिक, साधु । येन दत्तमात्रेणैव तेन दोहदकेनेदृशी नवमालिका संवृत्ता । येन निरन्तरोद्भिन्नकुसुमगुच्छाच्छादितविटपोपहसन्तीव लक्ष्यते देवीपरिगृहीता माधवीलता । तद्यावद्गत्वा प्रियवयस्यस्य निवेदयामि । एष खलु प्रियवयस्यस्तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्ष्यन्हर्षोत्फुल्ललोचन इत एवागच्छति । तद्यावदेनमुपसर्पामि ।

(ख) जयतु जयतु प्रियवयस्यः । भो वयस्य, दिष्ट्या वर्धसे ।

---

लिका संवृत्ता । येन निरन्तरोद्भिन्नकुसुमगुच्छाच्छादितविटपोपहसन्तीव लक्ष्यते देवीपरिगृहीता माधवीलता । तद्यावद्गत्वा प्रियवयस्यस्य निवेदयामि । एष खलु प्रियवयस्यस्तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्ष्यन्हर्षोत्फुल्ललोचन इत एवागच्छति । तद्यावदेनमुपसर्पामि । **राजा—उद्दामेति** । श्वसनोद्गमैः श्वासोच्छ्वासैः अविरतैरनुच्छिन्नैः । कोपविपाटलद्युति मुखमित्यनेनान्यकामिन्यासक्तत्वं व्यज्यते ॥ ४ ॥ **विदूषकः** । जयतु जयतु प्रियवयस्यः । भो वयस्य इमां

**राजा**—वयस्य, कः संदेहः । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । तदादेशय मार्गम् । येन वयमद्य तदवलोकनेन चक्षुषः फलमनुभवामः ।

**विदूषकः**—(साटोपम् ।) एदु भवं । (क)

**राजा**—गच्छाग्रतः ।

(उभौ सगर्वं परिक्रामतः ।)

**विदूषकः**—(आकर्ण्य सभयं निवृत्य राजानं हस्ते गृहीत्वा ससंभ्रमम् ।) भो वअस्स, एहि । पलाअह्म । (ख)

**राजा**—किमर्थम् ।

**विदूषकः**—भो, एअस्सिं बउलपाअवे को वि भूदो पडिवसदि । (ग)

**राजा**—धिङ् मूर्ख, विस्रब्धं गम्यताम् । कुत ईदृशानामत्र प्रभावः ।

**विदूषकः**—फुडक्खरं एव्व मन्तेदि । जइ मम वअणं ण पत्तिआअसि ता अग्गदो भविअ सअं एव्व आअण्णेहि । (घ)

**राजा**—(तथा कृत्वा श्रुत्वा च ।)

स्पष्टाक्षरमिदं यस्मान्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ॥ ९ ॥

(ऊर्ध्वं निरूप्य निपुणमवलोक्य ।) कथं सारिका ।

---

(क) एतु भवान् ।

(ख) भो वयस्य, एहि । पलायावः ।

(ग) भोः, एतस्मिन्बकुलपादपे कोऽपि भूतः प्रतिवसति ।

(घ) स्फुटाक्षरमेव मन्त्र्यते । यदि मे वचनं न प्रत्याययसि तदग्रतो भूत्वा स्वयमेवाकर्णय ।

---

ख्या वर्धसे । भाग्येनेत्यर्थः । **विदूषकः**। एतु भवान् । **विदूषकः**। भो वयस्य, एहि । पलायावः । **विदूषकः**। भोः, एतस्मिन्बकुलपादपे कोऽपि भूतः प्रतिवसति । **राजा**। विस्रब्धं निर्भयम् । ईदृशानां भूतादीनाम् । **विदूषकः**। स्फुटाक्षरमेव मन्त्र्यते । यदि मे वचनं न प्रत्याययसि तदग्रतो भूत्वा स्वयमेवाकर्णय । **स्पष्टेति**। स्त्रीस्वभावत इति जातिः । अनिर्ह्रादि शब्दितम् । सारिका । पक्षिणी

**विदूषकः**—(विचार्य ।) कधम् । सच्चं एव्व सारिआ । (क)

**राजा**—(सस्मितम् ।) वयस्य, एवम् ।

**विदूषकः**—भो वअस्स, तुमं भआलुओ । जेण सारिअं भूदेत्ति मण्णेसि । (ख)

**राजा**—धिङ् मूर्ख, यदात्मना कृतं तन्मयि संभावयसि ।

**विदूषकः**—भो, जइ एव्वं मा क्खु मं णिवारेसि । (सरोषं दण्डकाष्ठमुद्यम्य ।) आः दासीए धीए, तुमं जाणासि सच्चअं एव्व बह्मणो भाअदि त्ति । ता चिट्ठ चिट्ठ । इमिणा पिसुणहिअअकुडिलेण दण्डअट्ठेण पडिपक्कं विअ कइत्थफलं इमादो बउलपाअवादो आहणिअ पाडइस्सम् । (इति हन्तुमुद्यतः ।) । (ग)

**राजा**—(निवारयन् ।) मूर्ख, किमप्येषा रमणीयं व्याहरति तत्किमेनां त्रासयसि । शृणवस्तावत् ।

(उभावाकर्णयतः ।)

**विदूषकः**—एव्वं भणादि । इमस्स बह्मणस्स भोजणं दिज्जेत्ति । (घ)

---

(क) कथम् । सत्यमेव सारिका ।

(ख) भो वयस्य, त्वं भयालुकः । येन सारिकां भूत इति मन्यसे ।

(ग) भोः, यद्येवं मा खलु मां निवारय । आः दास्याः पुत्रि, त्वं जानासि सत्यमेव ब्राह्मणो भीषत इति । तत्तिष्ठ तिष्ठ । एतेन पिशुनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वमिव कपित्थफलमेतस्माद्बकुलपादपादाहत्य पातयिष्ये ।

(घ) एवं भणति । एतस्य ब्राह्मणस्य भोजनं देयमिति ।

---

त्यर्थः ॥५॥ **विदूषकः** । कथम् । सत्यमेव सारिका । **विदूषकः** । भो वयस्य त्वं भयालुकः । येन सारिकां भूत इति मन्यसे । **विदूषकः** । भोः, यद्येवं मा खलु मां निवारय । आः दास्या पुत्रि सारिके, त्वं जानासि सत्यमेव ब्राह्मणो भीषत इति । तत्तिष्ठ तिष्ठ । एतेन पिशुनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वं कपित्थफलमेतस्माद्बकुलपादपादाहत्य पातयिष्ये । **विदूषकः** । एवं भणति

**राजा**—सर्वमप्यौदरिकस्याभ्यवहार एव पर्यवस्यति । तत्सत्यं वद । किमालपति सारिका ।

**विदूषकः**—(आकर्ण्य ।) एव्वं भणादि । 'सहि, कीस तुए एत्थ अहं आलिहिदा ।' 'सहि, किं अआरणे कुप्पसि । जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदा ।' ता भो वअस्स, किं णेदम् । (क)

**राजा**—वयस्य, एवं तर्कयामि । कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन सखीपुरतोऽपह्नुतः । तत्सख्यापि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्रालिख्य रतिव्यपदेशेन दर्शितेति ।

**विदूषकः**—(छोटिकां दत्त्वा ।) भो वअस्स, जुज्जदि । (ख)

**राजा**—भो वयस्य, तूष्णीं भव । पुनरपि व्याहरति । तच्छ्रृणुवस्तावत् ।

(उभावपि शृणुतः ।)

**विदूषकः**—भो वअस्स, एव्वं भणादि । 'सहि, मा लज्ज । ईदिसस्स कण्णारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण हो-

---

(क) एवं भणति । सखि, किमिति त्वयात्राहमालिखिता । सखि, त्वंकिमकारणे कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता । तद्भो वयस्य, किं न्वेतत् ।

(ख) भो वयस्य, युज्यते ।

---

एतस्य ब्राह्मणस्य भोजनं देयमिति । **राजा** । औदरिकस्योदरपूरणानुरक्तस्य । अभ्यवहारो भक्षणम् । **विदूषकः** । एवं भणति । सखि, किमिति त्वयात्राहमालिखिता । सखि, किमकारणे कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता । तद्भो वयस्य, किं न्वेतत् । **राजा** । व्यपदेशेन मिषेण । अपह्नुतो गोपितः । वैदग्ध्याच्चातुर्यात् । **विदूषकः** । छोटिकां तालिकाम् । भो वयस्य, युज्यते । **विदूषकः** । भो वयस्य, एवं भणति । सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलाषेण भवितव्यम् ।

दव्वम् ।' भो वअस्स, मा पण्डिअगव्वं उव्वह । अहं दे एदाए मुहादो सुणिअ सव्वं वाक्खाणइस्सम् । जा एसा आलिहिदा सा कण्णा दंसणीआ । (क)

**राजा**—यद्येवं तदवहितैः श्रोतव्यम् । अस्त्यवकाशो नः कुतूहलस्य ।

**विदूषकः**—भो वअस्स, सुदं तुए जं एदाए मन्तिदम् । 'सहि, अदो वि मे अधिअदरं संदावो वट्टदि ।' 'सहि, अवणेहि इमाइं णलिणीपत्ताइं मुणालिआइं च । अलं एदिणा । कीस अआरणे अत्ताणं आआसेसि । (ख)

**राजा**—वयस्य, न केवलं श्रुतम् । अभिप्रायोऽपि लक्षितः ।

**विदूषकः**—भो वअस्स, अज्ज वि कुरकुराअदि एव्व एसा सारिआ दासीए धीआ । ता सव्वं सुणिअ वक्खाणइस्सम् । (ग)

---

(क) भो वयस्य, एवं भणति । सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलाषेण भवितव्यम् । भो वयस्य, मा पण्डितगर्वमुद्वह । अहं त एतस्या मुखतः श्रुत्वा सर्वं व्याख्यास्ये । यथालिखिता सा कन्या दर्शनीया ।

(ख) भो वयस्य, श्रुतं त्वया यदनया मन्त्रितम् । सखि, अतोऽपि मेऽधिकतरं संतापो वर्तते । सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । किमित्यकारण आत्मानमायासयसि ।

(ग) भो वयस्य, अद्यापि कुरुकुरायत एवैषा सारिका दास्याः पुत्री । तत्सर्वं श्रुत्वा व्याख्यास्ये ।

---

**विदूषकः** । भो वयस्य, मा पण्डितगर्वमुद्वह । अहं त एतस्या मुखतः श्रुत्वा सर्वं व्याख्यास्ये । यैषालिखिता सा कन्या दर्शनीया । **राजा** । अवहितैः सावधानैः । **विदूषकः** । भो वयस्य, श्रुतं त्वया यदनया मन्त्रितम् । सखि, अतोऽपि मेऽधिकतरं संतापो वर्तते । सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । किमित्यकारण आत्मानमायासयसि । **विदूषकः**। भो वयस्य, अद्यापि कुरुकुरायत एवैषा सारिका दास्याः पुत्री । तत्सर्वं श्रुत्वा

**राजा**—युक्तमभिहितम् ।

(पुनराकर्णयतः ।)

**विदूषकः**—भो वअस्स, एसा क्खु सारिआ दासीए दुहिदा चउव्वेदी बह्मणो विअ रिचाइं पढिदुं पउत्ता । (क)

**राजा**—वयस्य, कथय । किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति ।

**विदूषकः**—भो वअस्स, एव्वं भणादि ।

'दुल्लहजणअणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पिअसहि विसमं प्पेम्मं मरणं सरणं णु वरमेक्कम् ॥१॥'(ख)

**राजा**—(सस्मितम् ।) वयस्य, एवंविधं भवन्तं ब्राह्मणं मुक्त्वा कोऽन्य एवंविधानामृचामभिज्ञः ।

**विदूषकः**—तदो किं णु खु एदम् । (ग)

**राजा**—ननु गाथिकेयम् ।

**विदूषकः**—किं गाधिआ । तदो किं कहिअम् । (घ)

**राजा**—वयस्य, कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितंनिरपेक्षयोक्तम् ।

---

(क) भो वयस्य, एषा खलु सारिका दास्या दुहिता चतुर्वेदी ब्राह्मण इव ऋचः पठितुं प्रवृत्ता ।

(ख) भो वयस्य, एवं भणति ।

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम् ॥

(ग) ततः किं नु खल्वेतत् ।

(घ) किं गाथिका । ततः किं कथितम् ।

---

व्याख्यास्ये । **विदूषकः** । भो वयस्य, एषा खलु सारिका दास्या दुहिता चतुर्वेदी ब्राह्मण इव ऋचः पठितुं प्रवृत्ता । **विदूषकः** । भो वयस्य, एवं भणति । दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा । प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम् ॥१॥ **विदूषकः** । ततः किं नु खल्वेतत् । **विदूषकः** । किं

**विदूषकः**—(उच्चैर्विहस्य ।) किं एदेहिं वक्कभणिदेहिं । उजुअं एव्व किं ण भणासि जह मं एव्व अणासाअअन्तीएत्ति । अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्णवीअदि । (हस्ततालं दत्त्वोच्चैर्विहसति ।) (क)

**राजा**—(ऊर्ध्वमवलोक्य ।) धिङ् मूर्ख, किमुच्चैर्विहसता त्वया तपस्विनी त्रासितेयम् । येनोड्डीयान्यत्र क्वापि गता ।

(इति निरूपयतः ।)

**विदूषकः**—(विलोक्य ।) भो वअस्स, एसा कअलीघरं एव्व गदा । ता एहि । अणुसरेह्म । (ख)

(इति परिक्रामतः ।)

**राजा**—

दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शुकशिशुसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥ ६ ॥

**विदूषकः**—भो वअस्स, एदं क्खु कअलीघरअम् । जाव पविसह्म । (ग)

(इत्युभौ प्रविशतः ।)

---

(क) किमेतैर्वक्रभणितैः । ऋजुकमेव किं न भणसि यथा मामेवानासादयन्त्येति । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते ।

(ख) भो वयस्य, एषा कदलीगृहमेव गता । तदेहि । अनुसरावः ।

(ग) भो वयस्य, एतत्खलु कदलीगृहम् । यावत्प्रविशावः ।

---

गाथिका । ततः किं कथितम् । **विदूषकः** । किमेतैर्वक्रभणितैः । ऋजुकमेव किं न भणसि यथा मामेवानासादयन्त्येति । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते । **विदूषकः** । भो वयस्य, एषा कदलीगृहमेव गता । तदेहि । अनुसरावः । **राजा—दुर्वारामिति** । कुसुमशरव्यथां कामव्यथाम् अभिहितमुक्तम् । श्रवणपथातिथित्वं कर्णमार्गागतम् ॥ ६ ॥ **विदूषकः**

**विदूषकः**—किं एदाए दासीए धीआए सारिआए। इध दाव मन्दमारुदुव्वेलन्तबालकअलीदलसीअले सिलादले उवविसिअ मुहुत्तअं वीसह्म। (क)

**राजा**—यदभिरुचितं भवते।

**विदूषकः**—(पार्श्वतोऽवलोक्य।) भो वअस्स, एदेण उग्घाडिअदुवारेण दुट्ठवाणरेण ताए सारिआए पञ्जरेण होदव्वम्। (ख)

**राजा**—वयस्य, निरूप्यताम्।

**विदूषकः**—जं भवं आणवेदित्ति। (परिक्रम्यावलोक्य च।) एसो वि चित्तफलओ। जाव णं गेह्णामि। (गृहीत्वा निरूप्य च हर्षं नाटयति।) (ग)

**राजा**—(सकौतुकम्।) वयस्य, किमेतत्।

**विदूषकः**—दिट्ठिआ वड्ढसि। भो, एदं तं जं मए भणिदम्। तुमं जेव्व एत्थ आलिहिदो। अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्णवीअदि त्ति। (घ)

---

(क) किमेतया दास्याः पुत्र्या सारिकया। इह तावन्मन्दमारुतोच्चलद्बालकदलीदलशीतले शिलातल उपविश्य मुहूर्तं विश्राम्यावः।

(ख) भो वयस्य, एतेनोद्घाटितद्वारेण दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्।

(ग) यद्भवानाज्ञापयतीति। एषोऽपि चित्रफलकः। यावदेनं गृह्णामि।

(घ) दिष्ट्या वर्धसे। भोः, एतत्तद्यन्मया भणितम्। त्वमेवात्रालिखितः। अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति।

---

भो वयस्य, एतत्खलु कदलीगृहम्। यावत्प्रविशावः। **विदूषकः**। किमेतया दास्याः पुत्र्या सारिकया। इह तावन्मन्दमारुतोच्चलद्बालकदलीदलशीतले शिलातल उपविश्य मुहूर्तं विश्राम्यावः। **विदूषकः**। भो वयस्य, एतेनोद्घाटितद्वारेण दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्। **विदूषकः**। यद्भवानाज्ञापयतीति। एषोऽपि चित्रफलकः। यावदेनं गृह्णामि। **विदूषकः**।

**राजा**—(सहर्षं हस्तौ प्रसार्य ।) सखे, दर्शय दर्शय ।

**विदूषकः**—ण दे दंसइस्सम् । सावि कण्णआ एत्थ आलिहिदेत्ति । ता किं पारितोसिएण विणा ईदिसं कण्णारअणं दंसीअदि । (क)

**राजा**—(बलाद्गृहीत्वा पश्यति । विलोक्य सविस्मयम् ।)

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ ७ ॥

अपि च ।

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ ८ ॥

(ततः प्रविशति सागरिका सुसंगता च ।)

**सागरिका**—सहि सुसंगदे, ण समासादिदा अम्हेहिं सारिआ । चित्तफलअं वि दाव इमादो कअलीघरादो गेण्हिअ लहुं गच्छह्म । (ख)

**सुसंगता**—सहि, एव्वमेव करेह्म । (ग)

(इत्युपसर्पतः ।)

---

(क) न ते दर्शयिष्ये । सापि कन्यात्रालिखितेति । तत्किं पारितोषिकेन विनेदृशं कन्यारत्नं दर्श्यते ।

(ख) सखि सुसंगते, न समासादितास्माभिः सारिका । चित्रफलकमपि तावदेतस्मात्कदलीगृहाद्गृहीत्वा लघु गच्छावः ।

(ग) सखि, एवमेव कुर्वः ।

---

दिष्ट्या वर्धसे । भोः, एतत्तद्यन्मया भणितम् । त्वमेवात्रालिखितः । अन्यथ कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति । **विदूषकः** । न ते दर्शयिष्ये सापि कन्यात्रालिखितेति । तत्किं पारितोषिकेन विनेदृशं कन्यारत्नं दर्श्यते **राजा—लीलेति** । पक्षपातम् । पक्षे त्यागेनेत्यर्थः । मानसं चित्तम् । कम लाकरमपि ॥७॥ **विधायेति** । अस्या मुखपद्ममालोक्य ॥८॥ **सागरिका** । सखि सुसंगते, न समासादितास्माभिः सारिका । चित्रफलकमपि तावदेतस्मात्कदली

**विदूषकः**—भो वअस्स, कीस उण एसा ओणदमुही आलिहिदा । (क)

**सुसंगता**—(आकर्ण्य ।) सहि, जहा वसन्तओ मन्तेदि तहा तक्केमि भट्टिणा वि एत्थ होदव्वम् । ता कअलीघरगुम्मन्तरिआ भविअ पेक्खह्म । (ख)

(इत्युभे आकर्णयतः ।)

**राजा**—वयस्य, पश्य पश्य । ('विधायापूर्वपूर्णेन्दुम्' (२।८) इत्यादि पुनः पठति ।)

**सुसंगता**—सहि, दिट्ठिआ वड्ढसि । एसो दे वल्लहो तुमं ज्जेव्व वण्णेदि । (ग)

**सागरिका**—(सलज्जम् ।) सहि, कीस परिहाससीलदाए इमं जणं लहुं करेसि । (घ)

**विदूषकः**—(राजानं चालयित्वा ।) णं भणामि। कीस एसा ओणदमुही आलिहिदा । (ङ)

---

(क) भो वयस्य, किमिति पुनरेषावनतमुख्यालिखिता ।

(ख) सखि, यथा वसन्तको मन्त्रयते तथा तर्कयामि भर्त्राप्यत्र भवितव्यम् । तत्कदलीगृहगुल्मान्तरिते भूत्वा प्रेक्ष्यावः ।

(ग) सखि, दिष्टया वर्धसे । एष ते वल्लभस्त्वामेव वर्णयति ।

(घ) सखि, किमिति परिहासशीलतयेमं जनं लघुं करिष्यसि ।

(ङ) ननु भणामि । किमित्येषावनतमुख्यालिखिता ।

---

गृहाद्गृहीत्वा लघु गच्छावः । **सुसंगता** । सखि, एवमेव कुर्वः । **विदूषकः** । भो वयस्य, किमिति पुनरेषावनतमुख्यालिखिता । **सुसंगता** । सखि, यथा वसन्तको मन्त्रयते तथा तर्कयामि भर्त्राप्यत्र भवितव्यम् । तत्कदलीगृहगुल्मान्तरिते भूत्वा प्रेक्ष्यावः । **सुसंगता** । सखि, दिष्ट्या वर्धसे । एष ते वल्लभस्त्वामेव वर्णयति । **सागरिका** । सखि, किमिति परिहासशीलतयेमं जनं लघुं करिष्यसि । **विदूषकः** । ननु भणामि । किमित्येषावनतमुख्यालिखिता । **सु-**

**राजा**—वयस्य, सारिकयैव सकलमावेदितम् ।

**सुसंगता**—(विहस्य ।) सहि, दंसिदं मेहाविणीए सारिआए अत्तणो मेहावत्तणम् । (क)

**विदूषकः**—अवि सुहाअदि लोअणाणं ण वेत्ति सा । (ख)

**सागरिका**—(ससाध्वसं स्वगतम् ।) किं एसो भणिस्सदि त्ति जं सच्चं मरणजीविदाणं अन्तरे वट्टामि । (ग)

**राजा**—वयस्य, सुखयतीति किमुच्यते ।

कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरंगविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ ९ ॥

**सुसंगता**—सहि, सुदं तुए । (घ)

**सागरिका**—(विहस्य ।) तुमं एव्व सुणु । जाए आलेक्खविण्णाणं वण्णीअदि । (ङ)

**विदूषकः**—(फलकं निर्वर्ण्य ।) भो वअस्स, जस्स उण ईदिसीओ वि एव्वं पिअसमागमं बहु मण्णन्ति । तस्स उवरि अ

---

(क) सखि, दर्शितं मेधाविन्या सारिकयात्मनो मेधावित्वम् ।
(ख) अपि सुखयति लोचनयोर्न वेत्ति सा ।
(ग) किमेष भणिष्यतीति यत्सत्यं मरणजीवितयोरन्तरे वर्ते ।
(घ) सखि, श्रुतं त्वया ।
(ङ) त्वमेव शृणु । यस्या आलेख्यविज्ञानं वर्ण्यते ।

---

**संगता** । सखि, दर्शितं मेधाविन्या सारिकयात्मनो मेधावित्वम् । **विदूषकः** अपि सुखयति लोचनयोर्न वेति सा । **सागरिका** । किमेष भणिष्यतीति यत्सत्यं मरणजीवितयोरन्तरे वर्ते । **राजा—कृच्छ्रादिति** । त्रिवलीतरंगविषमे लहरीबोधनीचतरो(?) । निष्पन्दतामतिकम्पताम् ॥ ९ ॥ **सुसंगता** सखि, श्रुतं त्वया । **सागरिका** । त्वमेव शृणु । यस्या आलेख्यविज्ञानं वर्ण्यते । **विदूषकः** । भो वयस्य, यस्य पुनरीदृश्योऽप्येवं प्रियसमागमं ब

त्तणो को परिहवो । जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि । (क)

**राजा**—(निर्वर्ण्य ।) वयस्य, अनया लिखितोऽहमिति यत्सत्यमात्मन्येव बहुमानः । तत्कथं न पश्यामि । पश्य ।

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुसीकरकणौघः ।
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि ॥ १० ॥

**सागरिका**—(श्रुत्वा स्वगतम् ।) हिअअ, समस्सस समस्सस । मणोरहो वि दे दाणिं एत्तिअं भूमिं गदो । (ख)

**सुसंगता**—सहि, तुमं एव्व धण्णा सलाहणीआ सा जाए भट्टिणा एव्वं संदोसीअदि । (ग)

**विदूषकः**—(पार्श्वतोऽवलोक्य ।) एदं अवरं सरसकमलिणीदलमुणालविरइदं एताए मअणावत्थासूअअं सअणीअं लक्खीअदि । (घ)

**राजा**—वयस्य, निपुणमुपलक्षितम् । तथा हि ।

---

(क) भो वयस्य, यस्य पुनरीदृश्योऽप्येवं प्रियसमागमं बहु मन्यन्ते । तस्योपर्यात्मनः कः परिभवः । येनात्रैव तयालिखितमात्मानं न प्रेक्ष्यसि ।

(ख) हृदय, समाश्वसिहि समाश्वसिहि । मनोरथोऽपि त इदानीमियतीं भूमिं गतः ।

(ग) सखि, त्वमेव धन्या श्लाघनीया सा यया भर्त्रैवं संतोष्यते ।

(घ) एतदपरं सरसकमलिनीदलमृणालविरचितमेतस्या मदनावस्थासूचकं शयनीयं लक्ष्यते ।

---

मन्यन्ते । तस्योपर्यात्मनः कः परिभवः । येनात्रैव तयालिखितमात्मानं न प्रेक्ष्यसि । **राजा—भातीति** । स्पष्टम् ॥ १० ॥ **सागरिका** । हृदय, समाश्वसिहि समाश्वसिहि । मनोरथोऽपि त इदानीमियतीं भूमिं गतः । भूमिं मर्यादाम् । **सुसंगता** । सखि, त्वमेव धन्या श्लाघनीया सा यया भर्त्रैवं संतोष्यते । **विदूषकः** । एतदपरं सरसकमलिनीदलमृणालविरचितमेतस्या म-

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्गयाः संतापं वदति नलिनीपत्रशयनम् ॥ ११ ॥

अपि च ।

स्थितमुरसि विशालं पद्मिनीपत्रमेत-
त्कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताङ्गया यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ १२ ॥

**विदूषकः**—(नाट्येन मृणालिकां गृहीत्वा ।) भो वअस्स, अअं क्खु उवलद्धो अवरो ताए ज्जेव्व पीणत्थणजोग्गो किलिसन्तकोमलमु णालहारो । ता पेक्खदु भवं । (क)

**राजा**—(गृहीत्वोरसि विन्यस्य सोपालम्भम् ।) अयि जडप्रकृते,

परिच्युतस्तत्कुचकुम्भमध्या-
त्किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु स्यात् ॥ १३ ॥

**सुसंगता**—(आत्मगतम् ।) हद्धी । गुरुआणुराअक्खित्तहिअअं

---

(क) भो वयस्य, अयं खलूपलब्धोऽपरस्तस्या एव पीनस्तनयोग्यः क्लान्तकोमलमृणालहारः । तत्प्रेक्षतु भवान् ।

---

दनावस्थासूचकं शदनीयं लक्ष्यते । **राजा—परिम्लानमिति** । उभयत पृष्ठोदरपरिवर्तनात् । तनोः कृशस्य । अन्तः शयनाय मध्ये । व्यस्तन्यासं विपरीताविपरीतरचनम् । वलनैः संक्षोभनैः ॥ ११ ॥ **स्थितमिति** । ग्लापिताङ्गया दुःखिताङ्गयाः । परिणाहो विशालता । मण्डलाभ्यां स्तनातिमण्डलाभ्याम् ॥ १२ ॥ **विदूषकः** । भो वयस्य, अयं खलूपलब्धोऽपरस्तस्या एव पीनस्तनयोग्य क्लान्तकोमलमृणालहारः । तत्प्रेक्षतु भवान् । **राजा—परिच्युत इति** । शोषः शुष्कता । तावकस्य त्वदीयस्य ॥ १३ ॥ **सुसंगता** । हा धिक् । गुर्वनु

भट्टा असंबद्धं मन्तिदुं पउत्तो । ता अदो अवरं उण ण जुत्तं उपेक्खिदुं दाव । (प्रकाशम् ।) सहि, जस्स किदे तुमं आअदा सो अअं चिट्ठदि । (क)

**सागरिका**—(सासूयम् ।) सहि, कस्स किदे अहं आअदा । (ख)

**सुसंगता**—(विहस्य ।) अइ अण्णसङ्किदे, णं चित्तफलअस्स । ता गेण्ह तम् । (ग)

**सागरिका**—(सरोषम् ।) अइ, णिउणा क्खु तुमं वि ईदिसाणं आलावाणम् । ता अण्णदो गमिस्सम् । (इति गन्तुमिच्छति ।) (घ)

**सुसंगता**—अइ असहणे, इह दाव मुहुत्तअं चिट्ठ । जाव इमादो कअलीघरादो चित्तफलअं गेण्हिअ आअच्छामि । (ङ)

**सागरिका**—सहि, एव्वं करेहि । (च)

---

(क) हा धिक् । गुर्वनुरागाक्षिप्तहृदयो भर्तासंबद्धं मन्त्रयितुं प्रवृत्तः । तदतःपरं पुनर्न युक्तमुपेक्षितुं तावत् । सखि, यस्य कृते त्वमागता सोऽयं तिष्ठति ।

(ख) सखि, कस्य कृतेऽहमागता ।

(ग) अयि अन्यशङ्किते, ननु चित्रफलकस्य । तद्गृहाण तत् ।

(घ) अयि, निपुणा खलु त्वमपीदृशानामालापानाम् । तदन्यतो गमिष्ये ।

(ङ) अयि असहने, इह तावन्मुहूर्तं तिष्ठ । यावदेतस्मात्कदलीगृहाच्चित्रफलकं गृहीत्वागच्छामि ।

(च) सखि, एवं कुरु ।

---

रागाक्षिप्तहृदयो भर्तासंबद्धं मन्त्रयितुं प्रवृत्तः । तदतःपरं पुनर्न युक्तमुपेक्षितुं तावत् । सखि, यस्य कृते त्वमागता सोऽयं तिष्ठति । **सागरिका** । सखि, कस्य कृतेऽहमागता । **सुसंगता** । अयि अन्यशङ्किते, ननु चित्रफलकस्य । तद्गृहाण तत् । **सागरिका** । अयि, निपुणा खलु त्वमपीदृशानामालापानाम् । तदन्यतो गमिष्ये । **सुसंगता** । अयि असहने, इह तावन्मुहूर्तं तिष्ठ । यावदेतस्मात्कदलीगृहाच्चित्रफलकं गृहीत्वागच्छामि । **सागरिका** । सखि, एवं

(सुसंगता कदलीगृहाभिमुखं परिक्रामति ।)

**विदूषकः**—(सुसंगतां दृष्ट्वा ससंभ्रमम् ।) भो वअस्स, पच्छादेहि एदं चित्तफलअं इमिणा कअलीवत्तेण । एसा क्खु देवीए परिचारिआ सुसंगदा आअदा । (क)

(राजा पटान्तेन फलकमाच्छादयति ।)

**सुसंगता**—(उपसृत्य ।) जअदु जअदु भट्टा । (ख)

**राजा**—सुसंगते, स्वागतम् । इहोपविश्यताम् ।

(सुसंगतोपविशति ।)

**राजा**—सुसंगते, कथमिहस्थोऽहं भवत्या ज्ञातः ।

**सुसंगता**—(विहस्य ।) ण केवलं देवो । चित्तफलएण सह सव्वो वुत्तन्तोवि मए विण्णादो । ता देवीए गदुअ णिवेदइस्सम् । (इति गन्तुमिच्छति ।) (ग)

**विदूषकः**—(अपवार्य सभयम् ।) भो वअस्स, सव्वं संभावीअदि । मुहरा क्खु एसा गब्भदासी । ता परितोसेहि णम् । (घ)

**राजा**—युक्तमुक्तं भवता । (सुसंगतां हस्ते गृहीत्वा ।) सुसंगते,

---

(क) भो वयस्य, प्रच्छादयैतच्चित्रफलकमेतेन कदलीपत्रेण । एषा खलु देव्याः परिचारिका सुसंगतागता ।

(ख) जयतु जयतु भर्ता ।

(ग) न केवलं देवः । चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः । तद्देव्यै गत्वा निवेदयिष्ये ।

(घ) भो वयस्य, सर्वं संभाव्यते । मुखरा खल्वेषा गर्भदासी । तत्परितोषयैनाम् ।

---

कुरु । **विदूषकः** । भो वयस्य, प्रच्छादयैतच्चित्रफलकमेतेन कदलीपत्रेण । एषा खलु देव्याः परिचारिका सुसंगतागता । **सुसंगता** । जयतु जयतु भर्ता । **सुसंगता** । न केवलं देवः । चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः । तद्देव्यै गत्वा निवेदयिष्ये । **विदूषकः** । भो वयस्य, सर्वं संभाव्यते ।

क्रीडामात्रमेतत् । अकारणे त्वया देवी न व्यथयितव्या । इदं ते पारितोषिकम् । (इत्युक्तार्याभरणं दातुमिच्छति ।)

**सुसंगता**—(स्वगतम् ।) पसण्णो भट्टा । (प्रकटम् ।) अलं सङ्काए एदिणा भट्टुणो प्पसादेण अ । व्वकीलिदं एव्व । ता किं कण्णाभरणेण । एसो एव्व मे गुरुओ पसाओ । जं किं ति तुए एत्थ चित्तफलए आलिहिदेत्ति कुविदा मे पिअसही साअरिआ वट्टदि । ता गदुअ पसादीअदु । (क)

**विदूषकः**—भो, गेण्हामि एदं चित्तफलअम् । कदावि इमिणा पुणोवि कज्जं हुविस्सदि । (ख)

**राजा**—(ससंभ्रममुत्थाय ।) दर्शय दर्शय । क्वासौ ।

**सुसंगता**—इदो भट्टा । (ग)

(सर्वे कदलीगृहान्निष्क्रान्ताः ।)

**सागरिका**—(राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पं च स्वगतम् ।)

---

(क) प्रसन्नो भर्ता । अलं शङ्कयानया भर्तुः प्रसादेन च । व्याक्रीडितमेव । तत्किं कर्णाभरणेन । एष एव मे गुरुः प्रसादः । यत्किमिति त्वयात्र चित्रफलक आलिखितेति कुपिता मे प्रियसखी सागरिका वर्तते । तद्गत्वा प्रसाद्यताम् ।

(ख) भोः, गृह्णाम्येतच्चित्रफलकम् । कदाप्येतेन पुनरपि कार्यं भविष्यति ।

(ग) इतो भर्ता ।

---

मुखरा खल्वेषा गर्भदासी । तत्परितोषयैनाम् । **सुसंगता** । प्रसन्नो भर्ता । अलं शङ्कयानया भर्तुः प्रसादेन च । व्याक्रीडितमेव । तत्किं कर्णाभरणेन । एष एव मे गुरुः प्रसादः । यत्किमिति त्वयात्र चित्रफलक आलिखितेति कुपिता मे प्रियसखी सागरिका वर्तते । तद्गत्वा प्रसाद्यताम् । **विदूषकः** । भोः, गृह्णाम्येतच्चित्रफलकम् । कदाप्येतेन पुनरपि कार्यं भविष्यति । **सुसंगता** । इतो

एणं पेक्खिअ अदिसद्धसेण ण सक्कणोमि पदादो पदं वि गन्तुम्। ता किं वा एत्थ करिस्सम् । (क)

**विदूषकः**—(सागरिकां दृष्ट्वा ।) ही ही भो, अच्चरिअं अच्चरिअम् । ईदिसं कण्णआरअणं मणुस्सलोए ण दीसदि । ता तक्केमि पआवइणो वि एदं णिम्माइअ विम्हओ समुप्पण्णो त्ति । (ख)

**राजा**—वयस्य, ममाप्येवं मनसि वर्तते ।

दृशः पृथुतरी कृता जितनिजाब्जपत्रत्विष-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ १४ ॥

**सागरिका**—(सासूयं सुसंगतामालोक्य ।) सहि, ईदिसो चित्तफलओ तुए आणीदो । (इति गन्तुमिच्छति ।) (ग)

**राजा**—

दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।

---

(क) एनं प्रेक्ष्यातिसाध्वसेन न शक्नोमि पदात्पदमपि गन्तुम् तत्किं वात्र करिष्ये ।

(ख) ही ही भोः, आश्चर्यमाश्चर्यम् । ईदृशं कन्यारत्नं मनुष्यलोके न दृश्यते । तत्तर्कयामि प्रजापतेरप्येतां निर्माय विस्मयः समुत्पन्न इति ।

(ग) सखि, ईदृशश्चित्रफलकस्त्वयानीतः ।

---

भर्ता । **सागरिका** । एनं प्रेक्ष्यातिसाध्वसेन न शक्नोमि पदात्पदमपि गन्तुम् । तत्किं वात्र करिष्ये । **विदूषकः** । ही ही भोः, आश्चर्यमाश्चर्यम् । ईदृशं कन्यारत्नं मनुष्यलोके न दृश्यते । तत्तर्कयामि प्रजापतेरप्येतां निर्माय विस्मयः समुत्पन्न इति । **राजा—दृश इति** । पृथुतरी अतिविशाला । निजाब्जमासनकमलम् । ललामभूतां रत्नाभरणप्रायाम् ॥१४॥ **सागरिका** । सखि, ईदृशश्चित्रफलकस्त्वयानीतः । **राजा—दृष्टिमिति** । रुषा कोपेन । रूक्षभावं कार्क

त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयं ते
खेदं गमिष्यति गुरुर्नितरां नितम्बः ॥ १५ ॥

**सुसंगता**—भट्टा, अदिकोपणा क्खु एसा । ता अग्गहत्थे गेह्णिअ पसादेहि णम् । (क)

**राजा**—(सानन्दम् ।) यथाह भवती । (सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति ।)

**विदूषकः**—भो, एसा क्खु तुए अपुव्वा सिरी समासादिदा । (ख)

**राजा**—वयस्य, सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम् ॥ १६ ॥

**सुसंगता**—सहि, अदिणिट्ठुरा दाणिं सि तुमम् । जा एव्वं भट्टिणा हत्थे वलम्बिदा वि कोवं ण मुञ्चेसि । (ग)

**सागरिका**—(सभ्रूभङ्गम् ।) अइ सुसंगदे, अज्ज वि ण विरमेसि । (घ)

**राजा**—प्रिये सागरिके, न खलु सखीजने युक्त एवं कोपानुबन्धः कर्तुम् ।

---

(क) भर्तः, अतिकोपना खल्वेषा । तदग्रहस्ते गृहीत्वा प्रसादयैनाम् ।

(ख) भोः, एषा खलु त्वयापूर्वा श्रीः समासादिता ।

(ग) सखि, अतिनिष्ठुरेदानीमसि त्वम् । यैवं भर्त्रा हस्तेऽवलम्बितापि कोपं न मुञ्चसि ।

(घ) अयि सुसंगते, अद्यापि न विरमसि ।

---

श्यताम् । गुरुः स्थूलः । नितम्बः कटिः ॥ १५ ॥ **सुसंगता** । भर्तः, अतिकोपना खल्वेषा । तदग्रहस्ते गृहीत्वा प्रसादयैनाम् । **विदूषकः** । भोः, एषा खलु त्वयापूर्वा श्रीः समासादिता । **राजा—श्रीरिति** । पाणिः करः । स्वेदच्छद्मामृतद्रवं स्वेदमिषादमृतस्रवणम् ॥ १६ ॥ **सुसंगता** । सखि, अतिनिष्ठुरेदानीमसि त्वम् । यैवं भर्त्रा हस्तेऽवलम्बि[illegible]तापि कोपं न मुञ्चसि । **सागरिका** । अयि सुसंगते,

**विदूषकः**—भोदि, बुभुक्खिदो बह्मणो विअ किं कुप्पसि । (क)

**सुसंगता**—सहि, तुए सह ण बोलइस्सम् । (ख)

**राजा**—अयि कोपने, नैतद्युक्तं समानप्रतिपत्तिषु सखीषु ।

**विदूषकः**—एसा क्खु अवरा वासवदत्ता । (ग)

(राजा सचकितं सागरिकाया हस्तं मुञ्चति ।)

**सागरिका**—(ससंभ्रमम् ।) सुसंगदे, किं दाणिं करिस्सम् । (घ)

**सुसंगता**—सहि, एदं तमालविडअं अन्तरिअ इदो णिक्कमह्म । (ङ)

(इति निष्क्रान्ते ।)

**राजा**—(पार्श्वतोऽवलोक्य सविस्मयम् ।) क्वासौ देवी वासवदत्ता ।

**विदूषकः**—भो, ता एदम् । सा क्खु अवरा देवी वासवदत्ता अदिदीहरोसदाए त्ति भणिदम् । (च)

**राजा**—धिङ् मूर्ख,

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता ॥ १७ ॥

---

(क) भवति, बुभुक्षितो ब्राह्मण इव किं कुप्यसि ।

(ख) सखि, त्वया सह न विह्रिष्ये ।

(ग) एषा खल्वपरा वासवदत्ता ।

(घ) सुसंगते, किमिदानीं करिष्ये ।

(ङ) सखि, एतत्तमालविटपमन्तर्य इतो निष्क्रमावः ।

(च) भोः, तर्ह्येतत् । सा खल्वपरा देवी वासवदत्तातिदीर्घरोषतयेति भणितम् ।

---

अद्यापि न विरमसि । **विदूषकः** । भवति, बुभुक्षितो ब्राह्मण इव किं कुप्यसि । **सुसंगता** । सखि, त्वया सह न विह्रिष्ये । **राजा** । समानप्रतिपत्तिषु । 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च' इति विश्वः । **विदूषकः** । एषा खल्वपरा वासवदत्ता । **सागरिका** । सुसंगते, किमिदानीं करिष्ये । **सुसंगता** । सखि, एतत्तमालविटपमन्तर्य इतो निष्क्रमावः । **विदूषकः** । भोः, तर्ह्येतत् । सा खल्वपरा देवी वासवदत्तातिदीर्घरोषतयेति भणितम् । **राजा—प्राप्तेति** । दैवाद-

(ततः प्रविशति वासवदत्ता काञ्चनमाला च ।)

**वासवदत्ता**—हञ्जे कञ्चणमाले, अध केत्तिअदूरे दाणिं सा अज्जउत्तेण परिगहिदा णोमालिआ । (क)

**काञ्चनमाला**—एदं कअलीघरं अदिक्कमिअ दीसदि । (ख)

**वासवदत्ता**—तेण तत्थ एव्व गच्छह्म । (ग)

**काञ्चनमाला**—ता एदु एदु भट्टिणी । (घ)

(इति परिक्रामतः ।)

**राजा**—वयस्य, क्केदानीं प्रियतमा द्रष्टव्या ।

**काञ्चनमाला**—भट्टिणि, जह समीवे भट्टा वट्टदि तह तक्केमि भट्टिणीं एव्व पडिवालअन्तो चिट्ठदि । ता उवसप्पदु भट्टिणी । (ङ)

**वासवदत्ता**—(उपसृत्य ।) जअदु जअदु अज्जउत्तो । (च)

**राजा**—(अपवार्य ।) वयस्य, प्रच्छादय चित्रफलकम् ।

---

(क) हञ्जे काञ्चनमाले, अथ कियद्दूर इदानीं सार्यपुत्रेण परिगृहीता नवमालिका ।

(ख) एतत्कदलीगृहमतिक्रम्य दृश्यते ।

(ग) तेन तत्रैव गच्छावः ।

(घ) तदेत्वेतु भर्त्री ।

(ङ) भर्त्रि, यथा समीपे भर्ता वर्तते तथा तर्कयामि भर्त्रीमेव प्रतिपालयंस्तिष्ठति । तदुपसर्पतु भर्त्री ।

(च) जयतु जयत्वार्यपुत्रः ।

---

दृष्टयोगात् । प्रकटरागा प्रकटसात्त्विकादिभावः, प्रेमावर्णा च । **वासवदत्ता** । हञ्जे काञ्चनमाले, अथ कियद्दूर इदानीं सार्यपुत्रेण परिगृहीता नवमालिका । **काञ्चनमाला** । एतत्कदलीगृहमतिक्रम्य दृश्यते । **वासवदत्ता** । तेन तत्रैव गच्छावः । **काञ्चनमाला** । तदेत्वेतु भर्त्री । **काञ्चनमाला** । भर्त्रि, यथा समीपे भर्ता वर्तते तथा तर्कयामि भर्त्रीमेव प्रतिपालयंस्तिष्ठति । तदुपसर्पतु भर्त्री । **वासवदत्ता** । जयतु जयत्वार्यपुत्रः । **वासवदत्ता** । आर्यपुत्र,

(विदूषको गृहीत्वा कक्षे निक्षिपति ।)

**वासवदत्ता**—अज्जउत्त, कुसुमिदा णोमालिआ । (क)

**राजा**—(सविस्मयम् ।) देवि, प्रथममागतैरस्माभिस्त्वं चिरयसीति कृत्वा न दृष्टा । तदेहि । समेतावेव तां पश्यावः ।

**वासवदत्ता**—(निर्वर्ण्य ।) अज्जउत्तमुहाणुरागादो एव्व मए जाणिदं जहा कुसुमिदा णोमालिआत्ति । ता गमिस्सम् । (ख)

**विदूषकः**—भोदि, जइ एव्वं ता जिदं अह्मेहिं । (इति बाहू प्रसार्य नृत्यति । कक्षात्पतितं फलकं दृष्ट्वा विषादं नाटयति ।) (ग)

(राजापवार्याङ्गुल्या दर्शयन्वसन्तकमुखं पश्यति ।)

**विदूषकः**—(अपवार्य ।) भो, मा कोपं कुरुहि । एत्थ जाणिस्सम् । (घ)

**काञ्चनमाला**—(फलकं गृहीत्वा ।) भट्टिणि, पेक्ख दाव किं एत्थ चित्तफलए आलिहिदम् । (ङ)

**वासवदत्ता**—(निर्वर्ण्य स्वगतम् ।) अअं अज्जउत्तो । इअं उण साअरिआ । (प्रकाशं राजानं प्रति सकोपहासम् ।) अज्जउत्त, किं एदम् । (च)

---

(क) आर्यपुत्र, कुसुमिता नवमालिका ।

(ख) आर्यपुत्रमुखानुरागत एव मया ज्ञातं यथा कुसुमिता नवमालिकेति । तद्गमिष्ये ।

(ग) भवति, यद्येवं तज्जितमस्माभिः ।

(घ) भोः, मा कोपं कुरु । अत्र ज्ञास्ये ।

(ङ) भर्त्रि, प्रेक्षस्व तावत्किमत्र चित्रफलक आलिखितम् ।

(च) अयमार्यपुत्रः । इयं पुनः सागरिका । आर्यपुत्र, किमेतत् ।

---

कुसुमिता नवमालिका । **वासवदत्ता** । आर्यपुत्रमुखानुरागत एव मया ज्ञातं यथा कुसुमिता नवमालिकेति । तद्गमिष्ये । **विदूषकः** । भवति, यद्येवं तज्जितमस्माभिः । **विदूषकः** । भोः, मा कोपं कुरु । अत्र ज्ञास्ये । **काञ्चनमाला** । भर्त्रि, प्रेक्षस्व तावत्किमत्र चित्रफलक आलिखितम् । **वासवदत्ता** ।

**विदूषकः**—भो, मा चिन्तां करेहि । अहं उत्तरं दाइस्सम् । भोदि, अप्पा किल दुक्खं लिहदित्ति मम वचो सुणिअ पिअवअस्सेण एह विण्णाणं दंसिदम् । (क)

**वासवदत्ता**—(फलकं निर्दिश्य ।) अज्जउत्त, एसा वि अवरा तुह समीवे आलिहिदा । ता किं वसन्तअस्स विण्णाणम् । (ख)

**राजा**—(सवैलक्ष्यस्मितम् ।) देवि, अलमन्यथाशङ्कया । इयं हि कापि कन्यका स्वचेतसैव परिकल्प्य लिखिता । न तु दृष्टपूर्वा ।

**विदूषकः**—सच्चं सवामि बह्मसुत्तेण जइ कदा वि अह्मेहिं ईदिसी दिट्ठपुव्वा । (ग)

**काञ्चनमाला**—(अपवार्य ।) भट्टिणि, कदा वि ईदिसं घुणक्खरं संभवदि ज्जेव्व । ता अलं कोपेण । (घ)

**वासवदत्ता**—(अपवार्य ।) अइ उजुए, एदस्स वक्कभणिदाइं ण आणासि । वसन्तओ क्खु एसो । (प्रकाशम् । राजानं प्रति ।)

---

(क) भोः, मा चिन्तां कुरु । अहमुत्तरं दास्ये । भवति, आत्मा किल दुःखं लिखतीति मम वचः श्रुत्वा प्रियवयस्येनेह विज्ञानं दर्शितम् ।

(ख) आर्यपुत्र, एषाप्यपरा तव समीप आलिखिता । तत्किं वसन्तकस्य विज्ञानम् ।

(ग) सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा ।

(घ) भर्त्रि, कदापीदृशं घुणाक्षरं संभवत्येव । तदलं कोपेन ।

(ङ) अयि ऋजुके, एतस्य वक्रभणितानि न जानासि । वसन्तकः

---

अयमार्यपुत्रः । इयं पुनः सागरिका । आर्यपुत्र, किमेतत् । **विदूषकः** । भोः, मा चिन्तां कुरु । अहमुत्तरं दास्ये । भवति, आत्मा किल दुःखं लिखतीति मम वचः श्रुत्वा प्रियवयस्येनेह विज्ञानं दर्शितम् । **वासवदत्ता** । आर्यपुत्र, एषाप्यपरा तव समीप आलिखिता । तत्किं वसन्तकस्य विज्ञानम् । **विदूषकः** । सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा । **काञ्चनमाला** । भर्त्रि, कदापीदृशं घुणाक्षरं संभवत्येव । तदलं कोपेन । **वासवदत्ता** । अयि ऋजुके, एतस्य वक्रभणितानि न जानासि । वसन्तकः खल्वेषः ।

अज्जउत्त, मम उण एदं चित्तं पेक्खिअ सीसवेअणा समुप्पण्णा। ता सुहं चिट्ठदु अज्जउत्तो। अहं गमिस्सम् । (इत्युत्थाय गन्तुमिच्छति ।) (ङ)

**राजा**—(पटान्तेन गृहीत्वा ।) देवि,

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ १८ ॥

**वासवदत्ता**—(सविनयं पटान्तमाकर्षन्ती ।) अज्जउत्त, मा अण्णधा संभावेहि । सच्चं मं सीसवेअणा बाधेदि। ता गमिस्सम् ।(क)

(इति निष्क्रान्ते ।)

**विदूषकः**—भो, दिट्ठिआ वड्ढसे। क्खेमेण अदिक्कन्ता वासवदत्ता अआलवादलिआ विअ । (ख)

**राजा**—धिङ्मूर्ख, अलं परितोषेण । यान्त्या निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः । पश्य ।

---

खल्वेषः । आर्यपुत्र, मम पुनरेतच्चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना । तत्सुखं तिष्ठत्वार्यपुत्रः । अहं गमिष्ये ।

(क) आर्यपुत्र, मान्यथा संभावय । सत्यं मां शीर्षवेदना बाधते । तद्गमिष्ये ।

(ख) भोः, दिष्ट्या वर्धसे । क्षेमेणातिक्रान्ता वासवदत्ताकालाभ्रमिव ।

---

आर्यपुत्र, मम पुनरेतच्चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना। तत्सुखं तिष्ठत्वार्यपुत्रः। अहं गमिष्ये । **राजा—प्रसीदेतीति** । न घटते न युज्यते । अभ्युपगमः अंगिराः (?)। वक्तुं मिथ्यासमाधानं त्विदम्।**वासवदत्ता** आर्यपुत्र, मान्यथा संभावय । सत्यं मां शीर्षवेदना बाधते। तद्गमिष्ये। **विदूषकः** । भोः, दिष्ट्या वर्धसे । क्षेमेणातिक्रान्ता वासवदत्ताकालाभ्रमिव । **राजा—भ्रूभङ्ग इति**।

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ १९ ॥

तदेहि । देवीं प्रसादयितुमभ्यन्तरमेव प्रविशावः ।

(इति निष्क्रान्तौ ।)

इति द्वितीयोऽङ्कः ।

---

भेदकारि कलह हंत (?) । न विस्फारितमविकसितम् । प्रश्रयः प्रीतिः ॥ १९ ॥
द्वितीयोऽङ्कः ॥

तृतीयोऽङ्कः ।

(ततः प्रविशति मदनिका ।)

**मदनिका**—(आकाशे ।) कौसम्बिए, अवि दिट्ठा तुए भट्टिणो सआसे कञ्चणमाला ण वेत्ति। (कर्णं दत्त्वाकर्ण्य ।) किं भणासि—'को वि कालो ताए आअच्छिअ गदाए' त्ति। ता कहिं दाणिं पेक्खिस्सम् । (अग्रतोऽवलोक्य ।) कहं एसा क्खु कञ्चणमाला इदो ज्जेव्व आअच्छदि । ता जाव णं उपसप्पामि । (क)

(ततः प्रविशति काञ्चनमाला ।)

**काञ्चनमाला**—(सोत्प्रासम् ।) साहु रे वसन्तअ, साहु । अदिसइदो तुए अमच्चजोअन्धराअणो वि इमाए संधिविग्गहचिन्ताए । (ख)

**मदनिका**—(सस्मितमुपसृत्य ।) कञ्चणमाले, किं अज्जवसन्तएण किदं जेण सो एव्वं सलाहीअदि । (ग)

---

(क) कौशाम्बिके, अपि दृष्टा त्वया भर्तुः सकाशे काञ्चनमाला न वेति। किं भणसि—'कोऽपि कालस्तयागत्य गतया' इति। तत्कुत्रेदानीं प्रेक्षिष्ये । कथमेषा खलु काञ्चनमालेत एवागच्छति । तद्यावदेनामुपसर्पामि ।

(ख) साधु रे वसन्तक, साधु । अतिशयितस्त्वयामात्ययौगन्धरायणोऽप्यनया संधिविग्रहचिन्तया ।

(ग) काञ्चनमाले, किमार्यवसन्तकेन कृतं येन स एवं श्लाघ्यते

---

**मदनिका** । कौशाम्बिके, अपि दृष्टा त्वया भर्तुः सकाशे काञ्चनमाला न वेति किं भणसि—'कोऽपि कालस्तयागत्य गतया' इति। तत्कुत्रेदानीं प्रेक्षिष्ये। कथमेषा खलु काञ्चनमालेत एवागच्छति । तद्यावदेनामुपसर्पामि । **काञ्चनमाला** साधु रे वसन्तक, साधु। अतिशयितस्त्वयामात्ययौगन्धरायणोऽप्यनया संधिविग्रहचिन्तया। **मदनिका**। काञ्चनमाले, किमार्यवसन्तकेन कृतं येन स एवं श्लाघ्यते

**काञ्चनमाला**—हला, किं तव एदिणा पुच्छिदेण पओअणम्। तुमं इमं रहस्सं रक्खिदुं ण पारेसि। (क)

**मदनिका**—सबामि देवीए चलणेहिं जइ कस्स वि पुरदो पआसेमि। (ख)

**काञ्चनमाला**—ता जाव सुणु। अज्ज क्खु मए राअकुलादो पडिणिवत्तमाणाए चित्तसालिआदुवारे वसन्तअस्स सुसंगदाए समं आलाबो सुदो। (ग)

**मदनिका**—(सकौतुकम्।) सहि, कीदिसो। (घ)

**काञ्चनमाला**—जह–'सुसंगदे, णहि साअरिअं वज्जिअ पिअवअस्ससस्स अण्णं किं पि अस्सत्थदाए कालणम्। ता एत्थ पडिआरं चिन्तेहि'। (ङ)

**मदनिका**—तदो सुसंगदाए किं भणिदम्। (च)

---

(क) हला, किं तवैतेन पृष्टेन प्रयोजनम्। त्वमिमं रहस्यं रक्षितुं न पारयसि।

(ख) शपे देव्याश्चरणैर्यदि कस्यापि पुरतः प्रकाशयामि।

(ग) तद्यावच्छृणु। अद्य खलु मया राजकुलात्प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसंगतया सहालापः श्रुतः।

(घ) सखि, कीदृशः।

(ङ) यथा–'सुसंगते, नहि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत्किमप्यस्वस्थतायाः कारणम्। तदत्र प्रतिकारं चिन्तय'।

(च) ततः सुसंगतया किं भणितम्।

---

**काञ्चनमाला**। हला, किं तवैतेन पृष्टेन प्रयोजनम्। त्वमिमं रहस्यं रक्षितुं न पारयसि। **मदनिका**। शपे देव्याश्चरणैर्यदि कस्यापि पुरतः प्रकाशयामि। **काञ्चनमाला**। तद्यावच्छृणु। अद्य खलु मया राजकुलात्प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसंगतया सहालापः श्रुतः। **मदनिका**। सखि, कीदृशः। **काञ्चनमाला**। यथा–'सुसंगते, नहि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत्किमप्यस्वस्थतायाः कारणम्। तदत्र प्रतिकारं चिन्तय'।

**काञ्चनमाला**—तदो ताए एव्वं भणिदम्—'अज्ज क्खु देवीए चित्तफलअवुत्तन्तसङ्किदाए साअरिअं मम हत्थे समप्पअन्तीए जं णेवत्थं मे पसादीकिदं तदो तस्सिं जेव्व विरइदभट्टिणीवेसं साअरिअं गेण्हिअ अहं पि कञ्चणमालावेसधारिणी भविअ पदोसकाले भट्टिणो आगमिस्सम् । तुमं पि इध आट्ठिदा पडिवालइस्ससि । तदो माहवीलदामण्डवे ताए सह भट्टिणो समागमो भविस्सदि' । (क)

**मदनिका**—सुसंगदे, हदासि क्खु तुमं जइ एव्वं परिअणवच्छलां देविं वञ्चेसि । (ख)

**काञ्चनमाला**—हला, दाणिं तुमं कहिं पत्थिदा । (ग)

**मदनिका**—अस्सत्थसरीरस्स भट्टिणो कुसलवुत्तन्तं जाणिदुं गदा तुमं चिरअसि त्ति उक्कम्मन्तीए देवीए तुह समीपे पेसिदह्मि ।(घ)

---

(क) तदा तयैवं भणितम्—'अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं तत्तस्मिन्नेव विरचितभर्त्रीवेषां सागरिकां गृहीत्वाहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोषकाले भर्तुरागमिष्ये । त्वमपीहास्थिता प्रतिपालयिष्यसि । ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति' ।

(ख) सुसंगते, हतासि खलु त्वं यद्येवं परिजनवत्सलां देवीं वञ्चयसि ।

(ग) हला, इदानीं त्वं कुत्र प्रस्थिता ।

(घ) अस्वस्थशरीरस्य भर्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीत्युत्क्रामन्त्या देव्या तव समीपे प्रेषितास्मि ।

---

**मदनिका** । ततः सुसंगतया किं भणितम् । **काञ्चनमाला** । तदा तयैवं भणितम्—'अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं तत्तस्मिन्नेव विरचितभर्त्रीवेषां सागरिकां गृहीत्वाहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोषकाले भर्तुरागमिष्ये । त्वमपीहास्थिता प्रतिपालयिष्यसि । ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति' । **मदनिका** । सुसंगते, हतासि खलु त्वं यद्येवं परिजनवत्सलां देवीं वञ्चयसि । **काञ्चनमाला** । हला, इदानीं त्वं कुत्र प्रस्थिता । मद·

**काञ्चनमाला**—अदिउज्जुआ सा देवी जा एव्वं पत्तिआअदि । (परिक्रम्यावलोक्य च ।) कहं एत्थ एसो क्खु भट्टा अस्सत्थदामिसेण अत्तणो मअणावत्थं पच्छादअन्तो दन्ततोरणवलहीए उवरि उवविट्ठो चिट्ठदि । ता एहि । एदं वुत्तन्तं भट्टिणीए णिवेदेह्म । (क)

(इति निष्क्रान्ते ।)

**इति प्रवेशकः ।**

---

(ततः प्रविशति मदनावस्थां नाटयन्नुपविष्टो राजा ।)

**राजा**—(सोत्कण्ठं निःश्वस्य ।)

संतापो हृदय स्मरानलकृतः संप्रत्ययं सह्यतां
नास्त्येवोपशमोऽस्य तां प्रति पुनः किं त्वं मुधा ताम्यसि ।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ॥ १ ॥

अहो महदाश्चर्यम् ।

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ २ ॥

(ऊर्ध्वमवलोक्य ।) भोः कुसुमधन्वन्,

---

(क) अतिऋजुका सा देवी यैवं प्रत्यायते । कथमत्रैष खलु भर्तास्वास्थ्यमिषेणात्मनो मदनावस्थां प्रच्छादयन्दन्ततोरणवलभ्या उपर्युपविष्टस्तिष्ठति । तदेहि । एतद्वृत्तान्तं भर्त्र्यै निवेदयावः ।

---

निका । अस्वस्थशरीरस्य भर्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीत्युक्त्वामन्त्या देव्या तव समीपे प्रेषितास्मि । **काञ्चनमाला** । अतिऋजुका सा देवी यैवं प्रत्यायते । कथमत्रैष खलु भर्तास्वास्थ्यमिषेणात्मनो मदनावस्थां प्रच्छादयन्दन्ततोरणवलभ्या उपर्युपविष्टस्तिष्ठति । तदेहि । एतद्वृत्तान्तं भर्त्र्यै निवेदयावः । **राजा—संताप इति ।** हे हृदय, कामाग्निकृतः संतापो दाहः । तां प्रति रत्नावलीं प्रति । ताम्यसि म्लानीभवसि । विन्यस्तः स्थापितः । करो हस्त इति ॥ १ ॥ **मन इति ।** चलमस्थिरम् । दुर्लक्ष्यमणुरूपम् । समं सा-

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ ३ ॥

(विचिन्त्य ।) न तथाहमेवंविधावस्थमात्मानमनुचिन्तयामि यथान्तर्गूढकोपसंभाराया देव्या लोचनगोचरगतां तामेव तपस्विनीं सागरिकाम् । तथाहि ।

ह्रिया सर्वस्याधो नयति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ ४ ॥

प्रेषितश्च मया तद्वार्तान्वेषणाय वसन्तकः । तत्कथं चिरयति ।

(ततः प्रविशति हृष्टो वसन्तकः ।)

**वसन्तकः**—(सपरितोषम् ।) ही ही भो, अच्चरिअम् । कोसम्बीरज्जलाहेण वि ण तादिसो पिअवअस्सस्स हिअआभिलासो आसी जादिसो मम सआसादो अज्ज पिअवअणं सुणिअ हुविस्सदि त्ति तक्केमि । ता जाव गदुअ पिअवअस्सस्स णिवेदइस्सम् । (परिक्रम्यावलोक्य च ।) कधं एसो पिअवअस्सो जधा इमं ज्जेव्व दिसं अवलोअन्तो चिट्ठदि तहा तक्केमि मं ज्जेव्व पडिबालेदि । ता

---

र्थम् । शिलीमुखैर्बाणैरिति ॥ २ ॥ **बाणा इति** । नियता अन्यूनानधिकाः । विप्रतीपं विपरीतः । अयं कामिजनो मल्लक्षणः । अशरणः शरणहीनः । पञ्चतां मृतावस्थामिति ॥ ३ ॥ संभारः समुदायः । **ह्रियेति** । सर्वस्य विदितास्मीति वदनमधो नयति । वैलक्ष्यं निकारम् । आतङ्को भयमिति ॥ ४ ॥ **वसन्तकः** । ही ही भोः, आश्चर्यम् । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयाभिलाष आसीद्यादृशो मत्सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि । तद्यावद्गत्वा प्रियवयस्यस्य निवेदयिष्ये । कथमेष प्रियव

जाव णं उवसप्पामि । (इत्युपसृत्य ।) जअदु जअदु पिअवअस्सो । भो वअस्स, दिट्ठिआ वड्ढसे तुमं समीहिदकज्जसिद्धीए । (क)

**राजा**—(सहर्षम् ।) वयस्य, अपि कुशलं प्रियायाः सागरिकायाः ।

**विदूषकः**—(सगर्वम् ।) भो वअस्स, अइरेण सअं एव्व पेक्खिअ जाणिस्ससि । (ख)

**राजा**—(सपरितोषम् ।) वयस्य, दर्शनमपि भविष्यति प्रियायाः ।

**विदूषकः**—(साहंकारम् ।) भोः, कीस ण भविस्सदि । जस्स दे उवहसिदविहप्पदिबुद्धिविहवो अअं अमच्चो । (ग)

**राजा**—(विहस्य ।) न खलु चित्रम् । किं न संभाव्यते त्वयि । तत्कथय । विस्तरतः श्रोतुमिच्छामि ।

(विदूषकः कर्णे एवमेवं कथयति ।)

**राजा**—(सपरितोषम् ।) वयस्य, इदं ते पारितोषिकम् । (इति हस्तादवतार्य कटकं ददाति ।)

---

(क) ही ही भोः, आश्चर्यम् । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयाभिलाष आसीद्यादृशो मत्सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि । तद्यावद्गत्वा प्रियवयस्यस्य निवेदयिष्ये । कथमेष प्रियवयस्यो यथेमामेव दिशमवलोकयंस्तिष्ठति तथा तर्कयामि मामेव प्रतिपालयति । तद्यावदेनमुपसर्पामि । जयतु जयतु प्रियवयस्यः । भो वयस्य, दिष्ट्या वर्धसे त्वं समीहितकार्यसिद्ध्या ।

(ख) भो वयस्य, अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि ।

(ग) भोः, किमिति न भविष्यति । यस्य ते 'उपहसितबृहस्पतिबुद्धिविभवोऽयममात्यः ।

---

यस्यो यथेमामेव दिशमवलोकयंस्तिष्ठति तथा तर्कयामि मामेव प्रतिपालयति । तद्यावदेनमुपसर्पामि । जयतु जयतु प्रियवयस्यः । भो वयस्य, दिष्ट्या वर्धसे त्वं समीहितकार्यसिद्ध्या । **विदूषकः** । भो वयस्य, अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि । **विदूषकः** । भोः, किमिति न भविष्यति । यस्य त उपहसितबृह-

**विदूषकः**—(कटकं परिधायात्मानं निर्वर्ण्य ।) भोदु । एव्वं दाव । इमं सुद्धसोवण्णकडअमण्डिअहत्थं अत्तणो बह्मणीए गदुअ दंसइस्सम् । (क)

**राजा**—(हस्ते गृहीत्वा निवारयन् ।) सखे, पश्चाद्दर्शयिष्यसि । ज्ञायतां तावदधुना किमवशिष्टमह्न इति ।

**विदूषकः**—(परिक्रम्यावलोक्य च सहर्षम् ।) भोः, पेक्ख । एसो क्खु गुरुआणुराओक्खित्तहिअओ वारुणीवहूदिण्णसंकेदो विअ अत्थगिरिसिहरकाणणं अणुसरदि भअवं सहस्सरस्सी । (ख)

**राजा**—(विलोक्य सहर्षम् ।) सखे, सम्यगुपलक्षितम् । पर्यवसितमहः । तथाहि ।

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः ।
संध्याकृष्टावशिष्टस्वकरपरिकरस्पष्टहेमारपङ्क्ति-
र्व्याकृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः ॥ ९ ॥

अपि च ।

यातोऽस्मि पद्मवदने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।

---

(क) भवतु । एवं तावत् । इमं शुद्धसौवर्णकटकमण्डितहस्तमात्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि ।

(ख) भोः, प्रेक्षस्व । एष खलु गुर्वनुरागक्षिप्तहृदयो वारुणीवधूदत्तसंकेत इवास्तगिरिशिखरकाननमनुसरति भगवान्सहस्ररश्मिः ।

---

स्पतिबुद्धिविभवोऽयममात्यः । **विदूषकः** । भवतु । एवं तावत् । इमं शुद्धसौवर्णकटकमण्डितहस्तमात्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि । **विदूषकः** । भोः, प्रेक्षस्व । एष खलु गुर्वनुरागक्षिप्तहृदयो वारुणीवधूदत्तसंकेत इवास्तगिरिशिखरकाननमनुसरति भगवान्सहस्ररश्मिः । **राजा** । **अध्वानमिति** । संध्याकृष्टावशिष्टस्वकरपरिकरस्पष्टहेमारपङ्क्तिः । संध्यायामाकृष्य अवशिष्टाश्च ते स्वकराश्च तेषां परिकरः समूहः तेन स्पष्टा सुवर्णारपङ्क्तिः । व्याकृष्यैकीकृत्य । अस्तक्षितिभृदस्तपर्वतः ॥ ५ ॥ **यातोऽस्मीति** । प्रतिबोधनीया । प्रत्यायनं सत्वा-

प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ६ ॥

तदुत्तिष्ठ । तत्रैव माधवीलतामण्डपे गत्वा प्रियतमासंकेतावसरं प्रतिपालयावः ।

**विदूषकः**—सोभणं भणिदम् । (इत्युत्तिष्ठति । विलोक्य ।) भो वअस्स, पेक्ख पेक्ख । एसो क्खु बहलीकिदविरलवणराइसण्णिवेसो गहीदघणपङ्कपीवरवणवराहमहिसकसणच्छवी ओसरदि पुव्वदिसं पच्छादअन्तो तिमिरसंघाओ । (क)

**राजा**—(सहर्षं समन्ताद्विलोक्य ।) वयस्य, सम्यगुपलक्षितम् । तथाहि

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति ।
उपेतः पीनत्वं तदनु च जनस्येक्षणपथं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ ७ ॥

तदादेशय मार्गम् ।

**विदूषकः**—एदु एदु पिअवअस्सो । (ख)

(इति परिक्रामतः ।)

**विदूषकः**—(निरूप्य ।) भो वअस्स, एदं क्खु समासण्णं बह-

---

(क) शोभनं भणितम् । भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु बहलीकृतविरलवनराजिसंनिवेशो गृहीतघनपङ्कपीवरवनवराहमहिषकृष्णच्छविरपसरति पूर्वदिशां प्रच्छादयंस्तिमिरसंघातः ।

(ख) एत्वेतु प्रियवयस्यः ।

---

नाम् । अस्तमस्तकमस्ताचलमस्तकम् ॥ ६ ॥ **विदूषकः** । शोभनं भणितम् । भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु बहलीकृतविरलवनराजिसंनिवेशो गृहीतघनपङ्कपीवरवनवराहमहिषकृष्णच्छविरपसरति पूर्वदिशां प्रच्छादयंस्तिमिरसंघातः । **राजा** । **पुर इति** । स्थगयत्याच्छादयति । पीनत्वं बहुलम् । ईक्षणपथं दृष्टिमार्गम् । हरकण्ठद्युतिहरो नीलकण्ठद्युतिहरः ॥ ७ ॥ **विदूषकः** । एत्वेतु प्रियवयस्यः । **विदूषकः** । भो वयस्य, एतत्खलु समासन्नं बहलपादपतया पिण्डीकृतान्ध-

लपादवदाए पिण्डीकदन्धआरं विअ मअरन्दुज्जाणम् । ता कधं एत्थ मग्गो लक्खीअदि । (क)

**राजा**—(गन्धमाघ्राय ।) वयस्य, गच्छाग्रतः । ननु सुपरिज्ञात एवात्र मार्गः । तथाहि ।

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं बकुलविटपिनां पाटला पङ्क्तिरेषा ।
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मि-
न्व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतोऽप्येष चिह्नैः ॥८॥

(इति परिक्रामतः ।)

**विदूषकः**—भो वअस्स, एदं क्खु णिविडावव्यानमत्तमहुअरबहलकुसुमामोदवासिददिसामुहं मसिणमरगअमणिसिलाकुट्टिमसुहाअन्तचरणसंचारसूइदं तं जेव्व माहवीलदामण्डवं संपत्त ह्म । ता इह जेव्व चिट्ठदु भवं जाव अहं देवीवेसधारिणीं साअरिअं संगेह्णिअ लहुं आअच्छामि । (ख)

**राजा**—वयस्य, तेन हि त्वर्यताम् ।

---

(क) भो वयस्य, एतत्खलु समासन्नं बहलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानम् । तत्कथमत्र मार्गो लक्ष्यते ।

(ख) भो वयस्य, एतत्खलु निबिडापव्यानमत्तमधुकरबहलकुसुमामोदवासितदिशामुखं मसृणमरकतमणिशिलाकुट्टिमसुखायमानचरणसंचारसूचितं तमेव माधवीलतामण्डपं संप्राप्तौ स्वः । तदिहैव तिष्ठतु भवान्यावदहं देवीवेशधारिणीं सागरिकां संगृह्य लघ्वागच्छामि ।

---

कारमिव मकरन्दोद्यानम् । तत्कथमत्र मार्गो लक्ष्यते । **राजा । पालीयमिति ।** पाली पङ्क्तिः प्रान्तो वा । सा तापानिविपङ्क्तिः(?) । सिन्दुवारो निर्गुण्डी । निह्नुतोऽव्यप्रकटीकृतोऽपि ॥८॥ **विदूषकः ।** भो वयस्य, एतत्खलु निविडापव्यानमत्तमधुकरबहलकुसुमामोदवासितदिशामुखं मसृणमरकतमणिशिलाकुट्टिमसुखायमानचरणसंचारसूचितं तमेव माधवीलतामण्डपं संप्राप्तौ स्वः । तदिहैव तिष्ठतु

**विदूषकः**—भो वअस्स, मा उत्तम्म । एसो आअदोह्मि । (क)
(इति निष्क्रान्तः ।)

**राजा**—तावदहमप्यस्यां मरकतशिलावेदिकायामुपविश्य प्रियायाः संकेतसमयं प्रतिपालयामि । (उपविश्य सचिन्तम् ।) अहो, कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनं प्रति पक्षपातः । तथाहि ।

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥ ९ ॥

अये, कथं चिरयति वसन्तकः । तत्किं नु खलु विदितः स्यादयं वृत्तान्तो देव्या वासवदत्तया ।

(ततः प्रविशति वासवदत्ता काञ्चनमाला च ।)

**वासवदत्ता**—हञ्जे कञ्चणमाले, सच्चं ज्जेव्व मह वेसधारिणी भविअ साअरिआ अज्जउत्तं अहिसरिस्सदि । (ख)

**कञ्चनमाला**—कधं अण्णधा भट्टिणीए णिवेदीअदि । अहवा चित्तसालिआदुवारे उवविट्ठो वसन्तओ जेव्व दे पच्चअं उप्पादइस्सदि । (ग)

---

(क) भो वयस्य, मा उत्ताम्य । एष आगतोऽस्मि ।

(ख) हञ्जे काञ्चनमाले, सत्यमेव ममवेशधारिणी भूत्वा सागरिकार्यपुत्रमभिसरिष्यति ।

(ग) कथमन्यथा भर्त्र्यै निवेद्यते । अथवा चित्रशालिकाद्वार उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति ।

---

भवान्यावदहं देवीवेशधारिणीं सागरिकां संगृह्य लब्ध्वागच्छामि । **विदूषकः** । भो वयस्य, मा उत्ताम्य । एष आगतोऽस्मि । **राजा । प्रणयविशदामिति ।** विशदां निर्मलाम् । कण्ठाश्लेषे कण्ठेनालिङ्गिते । पयोधरौ स्तनौ ॥ ९ ॥ **वासवदत्ता ।** हञ्जे काञ्चनमाले, सत्यमेव ममवेशधारिणी भूत्वा सागरिकार्यपुत्रमभिसरिष्यति । **काञ्चनमाला ।** कथमन्यथा भर्त्र्यै निवेद्यते । अथवा चित्रशालिकाद्वार

**वासवदत्ता**—तदो तहिं एव्व गच्छह्म । (क)

**काञ्चनमाला**—एदु भट्टिणी । (ख)

(इति परिक्रामतः ।)

(ततः प्रविशत्युपविष्टः कृतावगुण्ठनो वसन्तकः ।)

**विदूषकः**—(कर्णौ दत्त्वा ।) जह अअं चित्तसालिआदुवारे पदसद्दो सुणीअदि तह तक्केमि आअदा साअरिआत्ति । (ग)

**काञ्चनमाला**—भट्टिणि, इयं सा चित्तसालिआ । ता जाव वसन्तअस्स सण्णं करेमि । (इति छोटिकां ददाति ।) (घ)

**विदूषकः**—(सहर्षमुपसृत्य सस्मितम् ।) सुसंगदे, सरिसो क्खु तुए किदो कञ्चणमालाए वेसो । अध साअरिआ कहिं दाणिम् । (ङ)

**काञ्चनमाला**—(अङ्गुल्या दर्शयन्ती ।) णं एसा । (च)

**विदूषकः**—(दृष्ट्वा सविस्मयम् ।) एसा फुडं ज्जेव्व वासवदत्ता । (छ)

---

(क) ततस्तत्रैव गच्छावः ।

(ख) एतु भर्त्री ।

(ग) यथासौ चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयाम्यागता सागरिकेति ।

(घ) भर्त्रि, इयं सा चित्रशालिका । तद्यावद्वसन्तकस्य संज्ञां करोमि ।

(ङ) सुसंगते, सदृशः खलु त्वया कृतः काञ्चनमालाया वेषः । अथ सागरिका कुत्रेदानीम् ।

(च) नन्वेषा ।

(छ) एषा स्फुटमेव वासवदत्ता ।

---

उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति । **वासवदत्ता** । ततस्तत्रैव गच्छावः । **काञ्चनमाला** । एतु भर्त्री । **विदूषकः** । यथासौ चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयाम्यागता सागरिकेति । **काञ्चनमाला** । भर्त्रि, इयं सा चित्रशालिका । तद्यावद्वसन्तकस्य संज्ञां करोमि । **विदूषकः** । सुसंगते, सदृशः खलु त्वया कृतः काञ्चनमालाया वेषः । अथ सागरिका कुत्रेदानीम् ।

**वासवदत्ता**—(साशङ्कमात्मगतम् ।) कहं लक्खिदह्मि । (क)

**विदूषकः**—भोदि साअरिए, इदो इदो एहि । (ख)

(वासवदत्ता विहस्य काञ्चनमालामवलोकयति ।)

**काञ्चनमाला**—(अपवार्याङ्गुल्या तर्जयन्ती । विदूषकं । प्रति) हदास, सुमरिस्ससि एदं वअणम् । (ग)

**विदूषकः**—तुवरदु तुवरदु साअरिआ । एसो क्खु पुव्वदिसादो उग्गच्छदि भअवं मिअलच्छणो । (घ)

(सर्वे परिक्रामन्ति ।)

**राजा**—(सोत्कण्ठमात्मगतम् ।) अये, उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे मनः । अथवा ।

तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्नः ।
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ॥ १० ॥

**विदूषकः**—(आकर्ण्य ।) भोदि साअरिए, एसो क्खु पिअवअस्सो तुमं ज्जेव्व उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि । ता णिवेदेमि तुहागमणम् । (ङ)

---

(क) कथं लक्षितास्मि ।

(ख) भवति सागरिके, इत इत एहि ।

(ग) हताश, स्मरिष्यस्येतद्वचनम् ।

(घ) त्वरतु त्वरतु सागरिका । एष खलु पूर्वदिशात उद्गच्छति भगवान्मृगलाञ्छनः ।

(ङ) भवति सागरिके, एष खलु प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयते । तन्निवेदयामि तवागमनम् ।

---

**काञ्चनमाला**। नन्वेषा । **विदूषकः** । एषा स्फुटमेव वासवदत्ता । **वासवदत्ता** । कथं लक्षितास्मि । **विदूषकः** । भवति सागरिके, इत इत एहि । **काञ्चनमाला** । भर्त्र्यामेव मेत्यङ्गुल्या तर्जयति । हताश, स्मरिष्यस्येतद्वचनम् । **विदूषकः** । त्वरतु त्वरतु सागरिका । एष खलु पूर्वदिशात उद्गच्छति भगवान्मृगलाञ्छनः । **राजा** । **तीव्र इति** । संतापो दाहः । आसन्ने समीपे । अभ्यर्णजलागमो निकटवृष्टिः॥१०॥**विदूषकः** ।भवति साग-

(वासवदत्ता शिरःसंज्ञां ददाति ।)

**विदूषकः**—(राजानमुपसृत्य ।) भो वअस्स, दिट्ठिआ वड्ढसे। एसा क्खु मए आणीदा साअरिआ । (क)

**राजा**—(सहर्षं सहसोत्थाय ।) वयस्य, क्वासौ क्वासौ ।

**विदूषकः**—(सभ्रूभङ्गम् ।) णं एसा । (ख)

**राजा**—(उपसृत्य ।) प्रिये सागरिके,

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ११ ॥

**वासवदत्ता**—(अपवार्य ।) कञ्चणमाले, एव्वं सअं मन्तेदि अ-ज्जउत्तो । पुणो वि मं कहं आलविस्सदित्ति अहो अच्चरिअम् । (ग)

**काञ्चनमाला**—(अपवार्य ।) भट्टिणि, एव्वं णेदम् । किं उण अवरं साहसिआणं पुरिसाणं ण संभावीअदि । (घ)

---

(क) भो वयस्य, दिष्ट्या वर्धसे। एषा खलु मयानीता सागरिका।

(ख) नन्वेषा ।

(ग) काञ्चनमाले, एवं स्वयं मन्त्रयत आर्यपुत्रः । पुनरपि मां कथ-मालापयिष्यतीत्यहो आश्चर्यम् ।

(घ) भर्त्रि, एवमिदम् । किं पुनरपरं साहसिकानां पुरुषाणां न संभाव्यते ।

---

रिके, एष खलु प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयते । तन्निवेदयामि तवागमनम् । **विदूषकः** । भो वयस्य, दिष्ट्या वर्धसे । एषा खलु मयानीता सागरिका । **विदूषकः** । नन्वेषा । **राजा** । **शीतांशुरिति** । रम्भा कदली । मृणालं बिसम् । अनङ्गतापविधुराणि कामदाहखिन्नानि । निर्वापय सुखय ॥११॥ **वासवदत्ता** । काञ्चनमाले, एवं स्वयं मन्त्रयत आर्यपुत्रः । पुनरपि मां कथमालापयिष्यतीत्यहो आश्चर्यम् । **काञ्चनमाला** । भर्त्रि, एवमिदम् ।

**विदूषकः**—भोदि साअरिए, वीसद्धा भविअ पिअवअस्सं आलावेहि । अज्जवि ताव णिच्चरुट्टाए देवीए वासवदत्ताए दुट्टवअणेहिं कडुइदा कण्णा सुहावेदु मउमहुरवअणोवण्णासो । (क)

**वासवदत्ता**—(अपवार्य सरोषस्मितम् ।) हञ्जे कञ्चणमाले, अहं ईदिसी कडुअवअणा । अज्ज वसन्तओ उण पिअंवदो । (ख)

**काञ्चनमाला**—(अपवार्याङ्गुल्या तर्जयन्ती ।) हदास, सुमरिस्ससि एदं वअणम् । (ग)

**विदूषकः**—(विलोक्य ।) भो वअस्स, पेक्ख पेक्ख । एसो क्खु कुविदकामिणीकवोलसण्णिहो पुव्वदिसं पआसअन्तो उदिदो भअवं मिलअञ्छणो । (घ)

**राजा**—(निरूप्य सस्पृहम् ।) प्रिये, पश्य पश्य ।

---

(क) भवति सागरिके, विश्रब्धा भूत्वा प्रियवयस्यमालापय । अद्यापि तावन्नित्यरुष्टाया देव्या वासवदत्ताया दुष्टवचनैः कटुकिता कर्णाः सुखयतु मृदुमधुरवचनोपन्यासः ।

(ख) हञ्जे काञ्चनमाले, अहमीदृशी कटुकवचना । अद्य वसन्तकः पुनः प्रियंवदः ।

(ग) हताश, स्मरिष्यस्येतद्वचनम् ।

(घ) भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु कुपितकामिनीकपोलसंनिभः पूर्वदिशं प्रकाशयन्नुदितो भगवान्मृगलाञ्छनः ।

---

किं पुनरपरं साहसिकानां पुरुषाणां न संभाव्यते । **विदूषकः** । भवति सागरिके, विश्रब्धा भूत्वा प्रियवयस्यमालापय । अद्यापि तावन्नित्यरुष्टाया देव्या वासवदत्ताया दुष्टवचनैः कटुकिता कर्णाः सुखयतु मृदुमधुरवचनोपन्यासः । **वासवदत्ता** । हञ्जे काञ्चनमाले, अहमीदृशी कटुकवचना । अद्य वसन्तकः पुनः प्रियंवदः । **काञ्चनमाला** । हताश, स्मरिष्यस्येतद्वचनम् । **विदूषकः** । भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु कुपितकामिनीकपोलसंनिभः पूर्वदिशं प्रका-

आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः ।
प्रतिकर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ १२ ॥

ननु प्रिये, किं न दर्शितमनेनोद्गच्छता जडत्वम् । कुतः ।

किं पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तवाप्यस्त्येव बिम्बाधरे ॥ १३ ॥

**वासवदत्ता**—(सरोषमवगुण्ठनपटमपनीय ।) अज्जउत्त, सच्चं एव्व अहं साअरिआ । तुमं उण साअरिआक्खित्तहिअओ सव्वं एव्व साअरिआसरिसं पेक्खसि । (क)

**राजा**—(दृष्ट्वा सवैलक्ष्यम् । अपवार्य ।) हा धिक् । कष्टम् । कथं देवी वासवदत्ता । वयस्य, किमेतत् ।

**विदूषकः**—(सविषादम् ।) भो, अवरं किम् । अह्माणं जीविदसंसओ जादो एव्व । (ख)

**राजा**—(उपविश्याञ्जलिं बद्ध्वा ।) प्रिये वासवदत्ते, प्रसीद प्रसीद ।

**वासवदत्ता**—(तदभिमुखमश्रूणि निपातयन्ती ।) अज्जउत्त, मा एव्वं भण । अदिक्कन्दाइं दाणिं एदाइं अक्खराइं । (ग)

---

(क) आर्यपुत्र, सत्यमेवाहं सागरिका । त्वं पुनः सागरिकाक्षिप्तहृदयकः सर्वमेव सागरिकासदृशं प्रेक्षसे ।

(ख) भोः अपरं किम् । अस्माकं जीवितसंशयो जात एव ।

(ग) आर्यपुत्र, मैवं भण । अतिक्रान्तानीदानीमेतान्यक्षराणि ।

---

शयन्नुदितो भगवान्मृगलाञ्छनः । **राजा** । **आरुह्येति** । शैलशिखरमुदगद्रिमस्तकम् । सर्वस्वः सर्वं धनम् । अयं स्थितः पुरस्तान्निशानाथश्चन्द्रः ॥१२॥ **किं पद्मस्येति** । सूर्यविकासिनः शोभां न हन्ति न हरति । झषकेतनस्य समुद्रस्य । कामस्यापि । आलोकमात्रेण प्रेक्षणमात्रेण । दर्पो गर्वः । बिम्बाधरः॥१३॥ **वासवदत्ता** । आर्यपुत्र, सत्यमेवाहं सागरिका । त्वं पुनः सागरिकाक्षिप्तहृदयकः सर्वमेव सागरिकासदृशं प्रेक्षसे । **विदूषकः** । भोः, अपरं किम् । अस्माकं जीवितसंशयो जात एव । **वासवदत्ता** । आर्यपुत्र, मैवं भण ।

**विदूषकः**—(आत्मगतम् ।) किं दाणिं एत्थ करिस्सम् । भोदु । एव्वं दाव । (प्रकाशम् ।) भोदि, महाणुभावा क्खु तुमम् । ता क्खमीअदु एदं अवराहो पिअवअस्सस्स । (क)

**वासवदत्ता**—अज्ज वसन्तअ, णं पढमसंगमे विग्घं करन्तीए मए ज्जेव्व एदस्स अवरद्धम् । (ख)

**राजा**—एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि । तथापि विज्ञापयामि ।

> आताम्रतामपनयामि विवर्ण एष
> लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
> कोपोपरागजनितां तु मुखेन्दुबिम्बे
> हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ १४ ॥

(इति पादयोः पतति ।)

**वासवदत्ता**—(हस्तेन वारयन्ती ।) अज्जउत्त, उट्ठेहि उट्ठेहि । णिल्लज्जो क्खु एसो जणो जो अज्जउत्तस्स ईदिसं हिअअं जाणिअ पुणोवि कुप्पदि । ता सुहं चिट्ठदु अज्जउत्तो । अहं गमिस्सम् । (इति गन्तुमिच्छति ।) (ग)

---

(क) किमिदानीमत्र करिष्ये । भवतु । एवं तावत् । भवति, महानुभावा खलु त्वम् । तत्क्षम्यतामेतावानपराधः प्रियवयस्यस्य ।

(ख) आर्य वसन्तक, ननु प्रथमसंगमे विघ्नं कुर्वन्त्या मयैवैतस्यापराद्धम् ।

(ग) आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । निर्लज्जः खल्वेष जनो य आर्यपुत्रस्येदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति । तत्सुखं तिष्ठत्वार्यपुत्रः । अहं गमिष्ये ।

---

अतिक्रान्तानीदानीमेतान्यक्षराणि । अन्यगतान्येतान्यक्षराणि । **विदूषकः** । किमिदानीमत्र करिष्ये । भवतु । एवं तावत् । भवति, महानुभावा खलु त्वम् । तत्क्षम्यतामेतावानपराधः प्रियवयस्यस्य । **वासवदत्ता** । आर्य वसन्तक, ननु प्रथमसंगमे विघ्नं कुर्वन्त्या मयैवैतस्यापराद्धम् । **राजा** । **आताम्रतामिति** । अपनयामि दूरीकरोमि । विवर्णोऽपराधी । क्षमः समर्थः । करुणा दया ॥१४॥ **वासवदत्ता** । आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । निर्लज्जः खल्वेष जनो य आर्यपुत्रस्येदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति । तत्सुखं तिष्ठत्वार्यपुत्रः । अहं

**काञ्चनमाला**—भट्टिणि, करेहि पसादम् । एवं चरणपडिअं महाराअं उज्झिअ गदाए देवीए पच्चादावेण होदव्वम् । (क)

**वासवदत्ता**—अवेहि अपण्डिदे, कुदो एत्थ पसादस्स पच्चादावस्स वा कारणम् । ता गमिस्सम् । (ख)

(इति निष्क्रान्ते ।)

**राजा**—देवि, प्रसीद प्रसीद । ('आताम्रतामपनयामि–' (३।१४) इति पुनः पठति ।)

**विदूषकः**—भो, उट्ठेहि । गदा वासअदत्ता देवी । ता कीस एत्थ अरण्णरुदिदं करेसि । (ग)

**राजा**—(मुखमुन्नमय्य ।) कथमकृत्वैव प्रसादं गता देवी ।

**विदूषकः**—न किदो कहं पसादो जं अज्जवि अक्खदसरीरा चिट्ठह्म । (घ)

**राजा**—धिङ् मूर्ख, किमेवमुपहससि माम् । ननु त्वत्कृत एवायमापतितोऽस्माकमनर्थक्रमः । यतः ।

समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।

(क) भर्त्रि, कुरुष्व प्रसादम् । एवं चरणपतितं महाराजमुज्झित्वा गतया देव्या पश्चात्तापेन भवितव्यम् ।

(ख) अपेह्यपण्डिते, किमत्र प्रसादस्य पश्चात्तापस्य वा कारणम् । तद्गमिष्ये ।

(ग) भोः, उत्तिष्ठ । गता वासवदत्ता देवी । तत्किमत्रारण्यरुदितं करोषि ।

(घ) न कृतः कथं प्रसादो यदद्याप्यक्षतशरीरास्तिष्ठावः ।

गमिष्ये । **काञ्चनमाला** । भर्त्रि, कुरु प्रसादम् । एवं चरणपतितं महाराजमुज्झित्वा गतया देव्या पश्चात्तापेन भवितव्यम् । **वासवदत्ता** । अपेह्यपण्डिते, किमत्र प्रसादस्य पश्चात्तापस्य वा कारणम् । तद्गमिष्ये । **विदूषकः** । भोः, उत्तिष्ठ । गता वासवदत्ता देवी । तत्किमत्रारण्यरुदितं करोषि । **विदूषकः** । न कृतः कथं प्रसादो यदद्याप्यक्षतशरीरास्तिष्ठावः । **राजा** । **समारूढेति** ।

प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ १५ ॥

**विदूषकः**—भो, रुट्ठा देवी । दाव ण जाणीअदि किं करिस्सदित्ति । साअरिआ उण अज्ज दुक्खजीवना हुविस्सदित्ति तक्केमि । (क)

**राजा**—वयस्य, अहमप्येवं चिन्तयामि । हा प्रिये सागरिके ।

(ततः प्रविशति वासवदत्तावेषधारिणी सागरिका ।)

**सागरिका**—(सोद्वेगम् ।) दिट्ठिआ इमिणा विरइददेवीवेसेण इमादो संगीदसालादो णिक्कमन्ती केणावि ण लक्खिदह्मि । ता किं दाणिं करिस्सम् । (इति सास्रं चिन्तयति ।) (ख)

**विदूषकः**—भो, किं मूढो भविअ चिट्ठसि । चिन्तेहि अवराधपडिआरम् । (ग)

**राजा**—वयस्य, तदेव चिन्तयामि । देवीप्रसादं मुक्त्वा नान्यमुपायं पश्यामि । तदेहि । तत्रैव गच्छावः ।

(इति परिक्रामतः ।)

**सागरिका**—(सास्रं विमृश्य ।) वरं दाणिं सअं जेव्व अत्ताणअं

(क) भोः, रुष्टा देवी । तावन्न ज्ञायते किं करिष्यतीति । सागरिका पुनरद्य दुःखजीवना भविष्यतीति तर्कयामि ।

(ख) दिष्ट्यानेन विरचितदेवीवेषेन तस्याः संगीतशालाया निष्क्रामन्ती केनापि न लक्षितास्मि । तत्किमिदानीं करिष्ये ।

(ग) भोः, किं मूढो भूत्वा तिष्ठसि । चिन्तयापराधप्रतीकारम् ।

व्यलीकमप्रियमपराधं वा । जीवितं प्राणम् । प्रकृष्टस्य गाढस्य । स्खलितं निच्छेदनम् । अविषह्यं सोढुमशक्यम् ॥ १५॥ **विदूषकः** । भोः, रुष्टा देवी । तावन्न ज्ञायते किं करिष्यतीति । सागरिका पुनरद्य दुःखजीवना भविष्यतीति तर्कयामि । **सागरिका** । दिष्ट्यानेन विरचितदेवीवेषेन तस्याः संगीतशालाया निष्क्रामन्ती केनापि न लक्षितास्मि । तत्किमिदानीं करिष्ये । **विदूषकः** । भोः, किं मूढो भूत्वा तिष्ठसि । चिन्तयापराधप्रतीकारम् । **सागरिका** । वरमि-

उब्बन्धिअ उवरदा भविस्सम् । जेण ण उण जाणिदसंकेतवुत्तन्तए देवीए सुसंगदा विअ परिभूदाह्मि । ता जाव अहं असोअपादवे गदुअ जधासमीहिदं करिस्सम् । (इति परिक्रामति ।) (क)

**विदूषकः**—(आकर्ण्य ।) चिट्ठ दाव चिट्ठ । णं पदसद्दो सुणीअदि । जाणामि कदापि गहिदपच्चावा पुणोवि देवी आअदा भवे। (ख)

**राजा**—वयस्य, महानुभावा खलु देवी । कदाचिदेवमपि स्यात् । तत्त्वरितं निरूपय ।

**विदूषकः**—जं भवं आणवेदि । (इति निष्क्रामति ।) (ग)

**सागरिका**—(उपसृत्य ।) ता जाव इमाए माहवीलदाए पासं विरइअ असोअपादवे अप्पाणअं उब्बन्धिअ वावादेमि । (इति लतापाशं रचयन्ती ।) हा ताद हा ताद, हा अम्ब हा अम्ब, एसा दाणिं अहं अणाधा असरणा विवज्जामि मन्दभाइणी । (इति कण्ठे लतापाशमर्पयति ।) (घ)

---

(क) वरमिदानीं स्वयमेवात्मानमुद्बध्योपरता भविष्ये । येन न पुनर्विदितसंकेतवृत्तान्तया देव्या सुसंगतेव परिभूतास्मि । तद्यावदहमशोकपादपे गत्वा यथासमीहितं करिष्ये ।

(ख) तिष्ठ तावत्तिष्ठ । ननु पदशब्दः श्रूयते । जानामि कदापि गृहीतप्रस्तावा पुनरपि देव्यागता भवेत् ।

(ग) यद्भवानाज्ञापयति ।

(घ) तद्यावदेतया माधवीलतया पाशं विरच्याशोकपादप आत्मानमुद्बध्य व्यापादयामि । हा तात हा तात, हा अम्ब हा अम्ब, एषेदानीमहमनाथाशरणा विपद्ये मन्दभागिनी ।

---

दानीं स्वयमेवात्मानमुद्बध्योपरता भविष्ये । उपरता मृता । येन न पुनर्विदितसंकेतवृत्तान्तया देव्या सुसंगतेव परिभूतास्मि । तद्यावदहमशोकपादपे गत्वा यथासमीहितं करिष्ये । **विदूषकः** । तिष्ठ तावत्तिष्ठ । ननु पदशब्दः श्रूयते । जानामि कदापि गृहीतप्रस्तावा पुनरपि देव्यागता भवेत् । **विदूषकः** । यद्भवानाज्ञापयति । **सागरिका** । तद्यावदेतया माधवीलतया

**विदूषकः**—(विलोक्य ।) का उण एसा । कहं उण देवी वासवदत्ता । (ससंभ्रममुच्चैः ।) भो वअस्स, परित्ताहि परित्ताहि । एसा क्खु देवी वासवदत्ता अप्पाणअं उब्बन्धिअ वावादेदि । (क)

**राजा**—(कण्ठात्पाशमपनयन् ।) अयि साहसकारिणि, किमिदमकार्यं क्रियते ।

ममः कण्ठगताः प्राणाः पाशे कण्ठस्थिते तव ।
अतः स्वार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥ १६ ॥

**सागरिका**—(राजानं दृष्ट्वा ।) अयि, कधं एसो भट्टा । (सहर्षमात्मगतम् ।) जं सच्चं एणं पेक्खिअ पुणोवि मे जीविदाहिलासो संवुत्तो । अधवा । एणं पेक्खिअ कदत्था भविअ सुहं अप्पाणअं उब्बन्धिअ जीविदं परिच्चइस्सम् । (प्रकाशम् ।) मुञ्चदु भट्टा । पराहीणो क्खु अअं जणो । ण उण ईदिसं अवसरं मरिदुं पावेदि । तुमं पि देवीए मा अप्पाणं अवराहिणं करेसि । (इति पुनः कण्ठे पाशं दातुमिच्छति ।) (ख)

---

(क) का पुनरेषा । कथं पुनर्देवी वासवदत्ता । भो वयस्य, परित्रायस्व परित्रायस्व । एषा खलु देवी वासवदत्तात्मानमुद्बध्य व्यापादयति ।

(ख) अयि, कथमेष भर्ता । यत्सत्यमेतं प्रेक्ष्य पुनरपि मे जीविताभिलाषः संवृत्तः । अथवा । एनं प्रेक्ष्य कृतार्था भूत्वा सुखमात्मानमुद्बध्य जीवितं परित्यजे । मुञ्चतु भर्ता । पराधीनः खल्वयं जनः । न पुनरीदृशमवसरं मर्तुं प्राप्यते । त्वमपि देव्या मात्मानमपराधिनं कुरुष्व ।

---

पाशं विरच्याशोकपादप आत्मानमुद्बध्य व्यापादयामि । हा तात हा तात, हा अम्ब हा अम्ब, एषेदानीमहमनाथाशरणा विपद्ये मन्दभागिनी । **विदूषकः** । का पुनरेषा । कथं पुनर्देवी वासवदत्ता । भो वयस्य, परित्रायस्व परित्रायस्व । एषा खलु देवी वासवदत्तात्मानमुद्बध्य व्यापादयति । **राजा** । **ममेति** । कण्ठगता मृतप्रायाः । पाशे लतारज्जुरूपे॥१६॥ **सागरिका** । अयि, कथमेष भर्ता । यत्सत्यमेतं प्रेक्ष्य पुनरपि मे जीविताभिलाषः संवृत्तः । अथवा । एनं प्रेक्ष्य कृतार्था भूत्वा सुखमात्मानमुद्बध्य जीवितं परित्यजे । मुञ्चतु भर्ता । पराधीनः खल्वयं जनः । न पुनरीदृशमवसरं मर्तुं प्राप्यते । त्वमपि देव्या मा-

**राजा**—(निरूप्य सहर्षम् ।) कथं प्रिया मे सागरिका । (इति कण्ठात्पाशमाक्षिप्य ।)

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेनम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ १७ ॥

(इति बाहुपाशमाक्षिप्य कण्ठे गृहीत्वा स्पर्शसुखमभिनीय विदूषकं प्रति ।) सखे, इयमनभ्रा वृष्टिः ।

**विदूषकः**—भो, एव्वं णेदम् । जइ अआलब्भा भविअ देवी आगच्छिअ अण्णधा ण करिस्सदि । (क)

(ततः प्रविशति वासवदत्ता काञ्चनमाला च ।)

**वासवदत्ता**—कञ्चणमाले, मह चरणणिबडिदं अज्जउत्तं अवधीरिअ आअच्छन्तीए मए अदिणिट्ठुरं किदम् । ता दाणिं सअं ज्जेव्व गदुअ अज्जउत्तं अणुणइस्सम् । (ख)

**काञ्चनमाला**—का अण्णा धण्णा देवीं वज्जिअ एव्वं भणिदुं जाणादि । वरं सो एव्व देवो दुज्जणो होदु । ण उण देवी । ता एदु देवी । (ग)

(इति परिक्रामतः ।)

---

(क) भोः, एवमेतत् । यद्यकालाभ्रा भूत्वा देव्यागत्यान्यथा न करिष्यति ।

(ख) काञ्चनमाले, मम चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरं कृतम् । तदिदानीं स्वयमेव गत्वार्यपुत्रमनुनयिष्ये ।

(ग) कान्या धन्या देवीं वर्जयित्वैवं भणितुं जानाति । वरं स एव देवो दुर्जनो भवतु । न पुनर्देवी । तदेतु देवी ।

---

त्मानमपराधिनं कुरुष्व । **राजा** । **अलमिति** । अतिमात्रमत्यर्थम् । विमुञ्च त्यज । जीवितं प्राणम् । बाहुपाशं हस्तपञ्जरम् ॥ १७ ॥ **विदूषकः** । भोः, एवमेतत् । यद्यकालाभ्रा भूत्वा देव्यागत्यान्यथा न करिष्यति । **वासवदत्ता** । काञ्चनमाले, मम चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरं कृतम् । तदिदानीं स्वयमेव गत्वार्यपुत्रमनुनयिष्ये । **काञ्चनमाला** ।

**राजा**—अयि मुग्धे, किमद्यापि मध्यस्थतया वयं विफलमनोरथाः क्रियामहे ।

**काञ्चनमाला**—(कर्णं दत्त्वा ।) भट्टिणि, जह समीवे भट्टा मन्तेदि तह तक्केमि तुमं ज्जेव्व अणुणेदुं आअच्छदि । ता उवसप्पदु भट्टिणी । (क)

**वासवदत्ता**—(सहर्षम् ।) ता अलक्खिदा एव्व पुट्ठदो गदुअ कण्ठे गेह्णिअ पसादइस्सम् । (ख)

**विदूषकः**—भोदि साअरिए, वीसत्था भविअ पिअवअस्सं आलावेहि । (ग)

**वासवदत्ता**—(आकर्ण्य सविषादम् ।) कञ्चणमाले, साअरिआ वि एत्थ चिट्ठदि । ता सुणह्म । जाणिअ पच्छा उवसप्पिस्सम् । (इति तथा करोति ।) (घ)

**सागरिका**—भट्टा, किं एदिणा अलीअदाक्खिण्णेण जीविदादो-

---

(क) भर्त्रि, यथा समीपे भर्ता मन्त्रयते तथा तर्कयामि त्वामेवानुनेतुमागच्छति । तदुपसर्पतु भर्त्री ।

(ख) तदलक्षितैव पृष्ठतो गत्वा कण्ठे गृहीत्वा प्रसादयिष्ये ।

(ग) भवति सागरिके, विश्वस्ता भूत्वा प्रियवयस्यमालापय ।

(घ) काञ्चनमाले, सागरिकाप्यत्र तिष्ठति । तच्छृणुवः । ज्ञात्वा पश्चादुपसर्पिष्ये ।

---

कान्या धन्या देवीं वर्जयित्वैवं भणितुं जानाति । वरं स एव देवो दुर्जनो भवतु । न पुनर्देवी । तदेतु देवी । **काञ्चनमाला** । भर्त्रि, यथा समीपे भर्ता मन्त्रयते तथा तर्कयामि त्वामेवानुनेतुमागच्छति । तदुपसर्पतु भर्त्री । **वासवदत्ता** । तदलक्षितैव पृष्ठतो गत्वा कण्ठे गृहीत्वा प्रसादयिष्ये । **विदूषकः** । भवति सागरिके, विश्वस्ता भूत्वा प्रियवयस्यमालापय । **वासवदत्ता** । काञ्चनमाले, सागरिकाप्यत्र तिष्ठति । तच्छृणुवः । ज्ञात्वा पश्चादुपसर्पिष्ये । **सागरिका** । भर्तः, किमेतेनालीकदाक्षिण्येन जीवितादप्यधिकवल्लभाया देव्याः

वि अधिअवल्लहाए देवीए पुणोवि अत्ताणअं अवराहिणं करेसि । (क)

**राजा**—अयि, मिथ्यावादिनी खल्वसि । कुतः ।

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ १८ ॥

**वासवदत्ता**—(उपसृत्य सरोषम् ।) अज्जउत्त, जुत्तं एदम् । सरिसं एदम् । (ख)

**राजा**—(दृष्ट्वा सवैलक्ष्यम् ।) देवि, न खल्वकारणे मामुपालब्धुमर्हसि । त्वामेव मत्वा वेषसादृश्याद्विप्रलब्धा वयमिहागताः । तत्क्षम्यताम् । (इति पादयोः पतति ।)

**वासवदत्ता**—(सरोषम् ।) अज्जउत्त, उट्ठेहि उट्ठेहि । किं अज्जवि सहजाभिजादाए सेवाए दुक्खं अणुभवीअदि । (ग)

**राजा**—(स्वगतम् ।) किमेतदपि श्रुतं देव्या । तत्सर्वथा देवीप्रसादनोपायं प्रति निराशीभूताः स्मः । (इत्यधोमुखस्तिष्ठति ।)

**विदूषकः**—भोदि, तुमं किल अत्ताणअं उब्बन्धिअ वावा-

---

(क) भर्तः, किमेतेनालीकदाक्षिण्येन जीवितादप्यधिकवल्लभाया देव्याः पुनरप्यात्मानमपराधिनं करोषि ।

(ख) आर्यपुत्र, युक्तमेतत् । सदृशमेतत् ।

(ग) आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । किमद्यापि सहजाभिजातया सेवया दुःखमनुभाव्यते ।

---

पुनरप्यात्मानमपराधिनं करोषि । **राजा** । **श्वासोत्कम्पिनीति** । कुटिलीकृतभ्रुणि वक्रीकृतभ्रुणि । यातं पतितम् । सहजाभिजात्यजनिता स्वभावजौचित्यविश्रया (?) ॥१८॥ **वासवदत्ता** । आर्यपुत्र, युक्तमेतत् । सदृशमेतत् । **वासवदत्ता** । आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । किमद्यापि सहजाभिजातया सेवया दुःखमनुभाव्यते । अभिजात्यमौचित्यम् । **विदूषकः** । भवति, त्वं किला-

देसि त्ति वेससारिस्समोहिदेण मए पिअवअस्सो एत्थ आणीदो। जइ मम वअणं ण पत्तिआअसि ता पेक्ख इमं लदापासम्। (इति लतापाशं दर्शयति।) (क)

**वासवदत्ता**—(सकोपम्।) हञ्जे कञ्चणमाले, एदेण एव्व लदापासेण बन्धिअ गेह्ण एणं बह्मणम्। एदं अ दुट्ठकण्णआं अग्गदो करेहि। (ख)

**काञ्चनमाला**—जं भट्टिणी आणवेदि। (लतापाशेन वसन्तकं गले बद्ध्वा ताडयति।) हदास, अणुभव दाव अत्तणो अविणअस्स फलम्। देवीए दुट्ठवअणेहिं कडुइदा कण्णा त्ति सुमरेहि तं वअणम्। साअरिए, तुमंपि अग्गदो होहि। (ग)

**सागरिका**—(स्वगतम्।) अकिदपुण्णाए मए मरिदुंवि अत्तणो इच्छाए ण अवापिदम्। (घ)

---

(क) भवति, त्वं किलात्मानमुद्बध्य विपद्यस इति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः। यदि मम वचनं न प्रत्याययसि तत्प्रेक्षस्वेमं लतापाशम्।

(ख) हञ्जे काञ्चनमाले, एतेनैव लतापाशेन बद्ध्वा गृहाणैनं ब्राह्मणम्। एतां च दुष्टकन्यकामग्रतः कुरु।

(ग) यद्भर्त्र्याज्ञापयति। हताश, अनुभव तावदात्मनोऽविनयस्य फलम्। देव्या दुष्टवचनैः कटुकितौ कर्णाविति स्मर तद्वचनम्। सागरिके, त्वमप्यग्रतो भव।

(घ) अकृतपुण्यया मया मर्तुमप्यात्मन इच्छया नावापितम्।

---

त्मानमुद्बध्य विपद्यसे इति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः। यदि मम वचनं न प्रत्याययसि तत्प्रेक्षस्वेमं लतापाशम्। **वासवदत्ता**। हञ्जे काञ्चनमाले, एतेनैव लतापाशेन बद्ध्वा गृहाणैनं ब्राह्मणम्। एतां च दुष्टकन्यकामग्रतः कुरु। **काञ्चनमाला**। यद्भर्त्र्याज्ञापयति। हताश, अनुभव तावदात्मनोऽविनयस्य फलम्। देव्या दुष्टवचनैः कटुकितौ कर्णाविति स्मर तद्वचनम्। सागरिके, त्वमप्यग्रतो भव। **सागरिका**। अकृतपुण्यया मया मर्तुमप्यात्मन

**विदूषकः**—(सविषादम् ।) भो वअस्स, सुमरेहि मं अणाधं देवीए बन्धणादो विवज्जन्तम् । (इति राजानमालोकयति ।) (क)

(वासवदत्ता राजानमालोकयन्तीं सागरिकां वसन्तकं च गृहीत्वा काञ्चनमालया सह निष्क्रान्ता ।)

**राजा**—(सखेदम् ।) कष्टं भोः, कष्टम् ।

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखं
त्रस्तां सागरिकां सुसंभृतरुषा संतर्ज्यमानां तथा ।
बद्ध्वा नीतमितो वसन्तकमहं किं चिन्तयामीत्यहो
सर्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥ १९॥

तत्किमिदानीमिह स्थितेन प्रयोजनम् । देवीमेव प्रसादयितुमभ्यन्तरं प्रविशामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति तृतीयोऽङ्कः ।

---

(क) भो वयस्य, स्मर मामनाथं देव्या बन्धनाद्विवर्जितुम् ।

---

इच्छया नावापितम् । **विदूषकः** । भो वयस्य, स्मर मामनाथं देव्या बन्धनाद्विवर्जितुं मुञ्चितुम् । **राजा** । किं देव्या इति । मुषितस्मितं चोरितहास्यम् । संतर्ज्यमानां भयभीताम् । सर्वाकारकृतव्यथः सर्वप्रकारजातदुःखः ॥ १९ ॥
**तृतीयोऽङ्कः** ॥

## चतुर्थोऽङ्कः ।

(ततः प्रविशति रत्नमालामादाय सास्रा सुसंगता ।)

**सुसंगता**—(सकरुणं निश्वस्य ।) हा पिअसहि साअरिए, हा लज्जालुए, हा सहीगणवच्छले, हा उदारसीले, हा सोम्मदंसणे, कहिं गदा इदाणिं तुमं मए देक्खिदव्वा । (इति रोदिति । ऊर्ध्वमवलोक्य निश्वस्य च ।) हंहो देव्वहदअ, अकरुण, असामण्णरूवसोहा तादिसी तुए जइ णिम्मिदा ता किंति उण ईदिसं अवत्थन्तरं पाविदा । इयं च रअणमाला वि जीविदणिरासाए ताए कस्सवि बह्म-णस्स हत्थे पडिबादेसुत्ति भणिअ मम हत्थे समप्पिदा । ता जाव कंपि बह्मणं अण्णेसामि । (नेपथ्याभिमुखमवलोक्य ।) अए, एसो क्खु अज्जवसन्तओ इदो एव्व आअच्छदि । ता एदं दाव इमस्सिं एव्व पडिवादइस्सम् । (क)

---

(क) हा प्रियसखि सागरिके, हा लज्जालुके, हा सखीगणवत्सले, हा उदारशीले, हा सौम्यदर्शने, कुत्र गतेदानीं त्वं मया प्रेक्षितव्या । हंहो दैवहतक, अकरुण, असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता तत्किमिति पुनरीदृशमवस्थान्तरं प्रापिता । इयं च रत्नमालापि जीवितनिराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेत्युक्त्वा मम हस्ते समर्पिता । तद्यावत्कमपि ब्राह्मणमन्वेषयामि । अये, एष खल्वार्यवसन्तक इत एवागच्छति । तदेतां तावदेतस्मिन्नेव प्रतिपादयामि ।

---

**सुसंगता** । हा प्रियसखि सागरिके, हा लज्जालुके, हा सखीगणवत्सले, हा उदारशीले, हा सौम्यदर्शने, कुत्र गतेदानीं त्वं मया प्रेक्षितव्या । हंहो दैव-हतक, अकरुण, असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता तत्किमिति पुनरीदृशमवस्थान्तरं प्रापिता । इयं च रत्नमालापि जीवितनिराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेत्युक्त्वा मम हस्ते समर्पिता । तद्यावत्कमपि ब्राह्मणमन्वेषयामि । अयि, एष खल्वार्यवसन्तक इत एवागच्छति । तदेतां तावदेतस्मिन्नेव प्रतिपादयामि । **विदूषकः** । अद्य खलु प्रियवयस्येन प्र-

(ततः प्रविशति हृष्टो वसन्तकः ।)

**विदूषकः**—अज्ज क्खु पिअवअस्सेण पसादिदाए तत्तभोदीए वासवदत्ताए बन्धणादो उम्मोचिअ सहत्थदिण्णेहिं मोदएहिं उदरं मे पूरिदम् । अण्णं च । एदं पट्टंसुअजुअलं कण्णाभरणं अ दिण्णम् । ता जाव दाणिं पिअवअस्सं पेक्खिस्सम् । (इति परिक्रामति ।) (क)

**सुसंगता**—(रुदती सहसोपसृत्य ।) अज्ज वसन्तअ, चिट्ठ दाव तुमं मुहुत्तअम् । (ख)

**विदूषकः**—(दृष्ट्वा ।) कधं सुसंगदा । सुसंगदे, एत्थ किं णिमित्तं रोदीअदि । ण क्खु साअरिआए अच्चाहिदं किंपि संवुत्तम् ।(ग)

**सुसंगता**—एदं ज्जेव्व णिवेदइदुकामा । सा क्खु तवस्सिणी देवीए उज्जइणिं णीदेत्ति प्पवादं कदुअ उवत्थिदे अद्धरत्ते ण जाणीअदि कहिं णीदेत्ति । (घ)

---

(क) अद्य खलु प्रियवयस्येन प्रसादितया तत्रभवत्या वासवदत्तया बन्धनादुन्मोच्य स्वहस्तदत्तैर्मोदकैरुदरं मे पूरितम् । अन्यच्च । एतत्पट्टांशुकयुगलं कर्णाभरणं च दत्तम् । तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये ।

(ख) आर्य वसन्तक, तिष्ठ तावत्त्वं मुहूर्तम् ।

(ग) कथं सुसंगता । सुसंगते, अत्र किंनिमित्तं रुद्यते । न खलु सागरिकाया अत्याहितं किमपि संवृत्तम् ।

(घ) एतदेव निवेदयितुकामा । सा खलु तपस्विनी देव्योज्जयिनीं नीतेति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्र नीतेति ।

---

सादितया तत्रभवत्या वासवदत्तया बन्धनादुन्मोच्य स्वहस्तदत्तैर्मोदकैरुदरं मे पूरितम् । अन्यच्च । एतत्पट्टांशुकयुगलं कर्णाभरणं च दत्तम् । तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये । **सुसंगता** । आर्य वसन्तक, तिष्ठ तावत्त्वं मुहूर्तम् । **विदूषकः** । कथं सुसंगता । सुसंगते, अत्र किंनिमित्तं रुद्यते । न खलु सागरिकाया अत्याहितं किमपि संवृत्तम् । अत्याहितमसत् । **सुसंगता** । एतदेव निवेदयितुकामा । सा खलु तपस्विनी देव्योज्जयिनीं नीतेति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न

**विदूषकः**—(सोद्वेगम् ।) हा भोदि साअरिए, हा असामाण्ण-रूवसोहे, हा मिदुभासिणि, अदिणिग्घिणं दाणिं देवीए किदम् । तदो तदो । (क)

**सुसंगता**—एसा रअणमाला ताए जीविदणिरासाए अज्जव-सन्तअस्स हत्थे पडिवादेसित्ति भणिअ मम हत्थे समप्पिदा । ता णं गेण्हदु अज्जो एदम् । (ख)

**विदूषकः**—(सास्रं सकरुणं कर्णौ पिधाय ।) भोदि, ण मम ईदिसे पत्थावे एदं वोढुं हत्थो पसरदि । (ग)

(इत्युभौ रुदतः ।)

**सुसंगता**—(अञ्जलिं बद्ध्वा ।) ताए एव्व अणुग्गहं करन्तो अङ्गी-करेदु एदं अज्जो । (घ)

**विदूषकः**—(विचिन्त्य ।) अहवा । उवणेहि । जेण इमाए ज्जेव्व साअरिआविरहकुण्ठिदं पिअवअस्सं विणोदेमि । (ङ)

---

(क) हा भवति सागरिके, हा असामान्यरूपशोभे, हा मृदुभाषिणि, अतिनिघृणमिदानीं देव्या कृतम् । ततस्ततः ।

(ख) एषा रत्नमाला तया जीवितनिराशयार्यवसन्तकस्य हस्ते प्र-तिपादयेत्युक्त्वा मम हस्ते समर्पिता । तन्ननु गृह्णात्वार्य एताम् ।

(ग) भवति, न म ईदृशे प्रस्ताव एतद्वोढुं हस्तः प्रसरति ।

(घ) तस्या एवानुग्रहं कुर्वन्नङ्गीकरोत्वेतदार्यः ।

(ङ) अथवा । उपनय । येनैतयैव सागरिकाविरहकुण्ठितं प्रियवयस्यं विनोदयामि ।

---

ज्ञायते कुत्र नीतेति । **विदूषकः** । हा भवति सागरिके, हा असामान्यरूप-शोभे, हा मृदुभाषिणि, अतिनिर्घृणमिदानीं देव्या कृतम् । ततस्ततः । **सुसंगता** । एषा रत्नमाला तया जीवितनिराशयार्यवसन्तकस्य हस्ते प्रति-पादयेत्युक्त्वा मम हस्ते समर्पिता । तन्ननु गृह्णात्वार्य एताम् । **विदूषकः** । भवति, न म ईदृशे प्रस्ताव एतद्वोढुं हस्तः प्रसरति । **सुसंगता** । तस्या एवानु-ग्रहं कुर्वन्नङ्गीकरोत्वेतदार्यः । **विदूषकः** । अथवा । उपनय । येनैतयैव साग-

(सुसंगता वसन्तकस्य हस्ते रत्नमालां ददाति ।)

**विदूषकः**—(गृहीत्वा निरूप्य सविस्मयम् ।) भोदि, कुदो उण ईदिसस्स अलंकारस्स आगमो । (क)

**सुसंगता**—अज्ज मए वि कोदूहलेण सा पुच्छिदा एव्व आसी।(ख)

**विदूषकः**—तदो ताए किं भणिदम् । (ग)

**सुसंगता**—तदो सा उद्धं पेक्खिअ दीहं णिस्ससिअ 'सुसंगदे, किं दाणिं तुह इमाए कधाए'त्ति भणिअ रोदिदुं पउत्ता । (घ)

**विदूषकः**—णं कधिदं एव्व सामण्णजणदुल्लहेण परिच्छदेण। सव्वधा महाभिजणसमुप्पण्णाए ताए होदव्वम् । सुसंगदे, पिअवअस्सो दाणिं कहिं । (ङ)

**सुसंगता**—अज्ज एसो क्खु भट्टा देवीभवणादो णिक्कमिअ

---

(क) भवति, कुतः पुनरीदृशस्यालंकारस्यागमः ।

(ख) अद्य मयापि कौतूहलेन सा पृष्टैवासीत् ।

(ग) ततस्तया किं भणितम् ।

(घ) ततः सोर्ध्वं प्रेक्ष्य दीर्घं निश्वस्य 'सुसंगते, किमिदानीं तवैतया कथया' इत्युक्त्वा रुदितुं प्रवृत्ता ।

(ङ) ननु कथितमेव सामान्यजनदुर्लभेन परिच्छदेन । सर्वथा महाभिजनसमुत्पन्नया तया भवितव्यम् । सुसंगते, प्रियवयस्य इदानीं कुत्र ।

(च) अद्यैष खलु भर्ता देवीभवनान्निष्क्रम्य स्फटिकशालाया-

---

रिकाविरहकुण्ठितं प्रियवयस्यं विनोदयामि । **विदूषकः** । भवति, कुतः पुनरीदृशस्यालंकारस्यागमः । **सुसंगता** । अद्य मयापि कौतूहलेन सा पृष्टैवासीत् । **विदूषकः** । ततस्तया किं भणितम् । **सुसंगता** । ततः सोर्ध्वं प्रेक्ष्य दीर्घं निश्वस्य 'सुसंगते, किमिदानीं तवैतया कथया' इत्युक्त्वा रुदितुं प्रवृत्ता । **विदूषकः** । ननु कथितमेव सामान्यजनदुर्लभेन परिच्छदेन । सर्वथा महाजनसमुत्पन्नया तया भवितव्यम् । सुसंगते, प्रियवयस्य इदानीं कुत्र । परिच्छदेना-

फडिअसालं उवगदो । ता गच्छदु अज्जो । अहंवि देवीए वासवदत्ताए परिचारिणी भविस्सम् । (च)

(इति निष्क्रान्तौ ।)

इति प्रवेशकः ।

---

(ततः प्रविशत्यासनस्थो राजा ।)

**राजा**—(विचिन्त्य ।)

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।
प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥ १ ॥

(सोत्कण्ठं निश्वस्य ।) तावदिदानीं देव्यां प्रसादितायां सागरिकाचिन्तैव केवलं मां बाधते । कुतः ।

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय ।
सद्यःपतन्मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥ २ ॥

(विचिन्त्य ।) योऽपि मे विश्रामस्थानं वसन्तकः सोऽपि देव्या संयतः । तत्कस्याग्रतो बाष्पमोक्षं करिष्ये । (इति निश्वसिति ।)

(ततः प्रविशति वसन्तकः ।)

**वसन्तकः**—(परिक्रम्यावलोक्य च सविस्मयम् ।) एसो क्खु प्पिअ-

---

मुपगतः । तद्गच्छत्वार्यः । अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि ।

---

भरणेन । **सुसंगता** । अद्यैष खलु भर्ता देवीभवनान्निष्क्रम्य स्फटिकशालाया-मुपगतः । तद्गच्छत्वार्यः । अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि । **राजा** । **सव्याजैरिति** । वैलक्ष्येणातिदीनत्वेन । पादपतनैर्नमस्कारैः । प्रत्यासत्तिं पुनस्तामेवावस्थाम् । उपनीतो दूरीकृतः ॥ १ ॥ **अम्भोजेति** । अम्भोजगर्भाः कमलान्तःपत्राणि । असौ सागरिका । प्रथमरागघने प्रथमप्रीतिघने । विलीय लयं प्राप्य ॥ २ ॥ **वसन्तकः** । एष खलु प्रियवयस्यो निरन्तरो-

वअस्सो णिरन्तरुक्कण्ठापरिक्खामं पि सलाहणिज्जां तणुं समुव्वहन्तो उदिदो दुदिआचन्दो विअ अहिअदरं सोहदि । जाव णं उपसप्पामि । (उपसृत्य ।) सोत्थि भवदे । भो, दिट्ठिआ वड्ढसे । देवीहत्थगदेणावि मए पुणोवि एदेहिं अच्छीहिं जं दिट्ठोसि । (क)

**राजा**—(दृष्ट्वा सहर्षम् ।) अये, वसन्तकः प्राप्तः । सखे, परिष्वजस्व माम् । (विदूषकं परिष्वज्य ।) वेषेणैव निवेदितस्ते देव्याः प्रसादः । तत्कथ्यतामिदानीं सागरिकायाः का वार्तेति ।

(विदूषकः सवैलक्ष्यमधोमुखस्तिष्ठति ।)

**राजा**—वयस्य, किं न कथयसि ।

**विदूषकः**—अप्पिअं त्ति वादिदुं ण पारेमि । (ख)

**राजा**—(सोद्वेगं ससंभ्रमम् ।) वयस्य, कथमप्रियम् । किं व्यक्तमेवोत्सृष्टं जीवितं तया । हा प्रिये सागरिके । (इति मोहं नाटयति ।)

**विदूषकः**—(ससंभ्रमम् ।) समस्ससदु पिअवअस्सो । (ग)

**राजा**—(समाश्वस्य सास्रम् ।)

प्राणाः परित्यजत काममदक्षिणं मां
रे दक्षिणा भवत मद्वचनं शृणुध्वम् ।

---

(क) एष खलु प्रियवयस्यो निरन्तरोत्कण्ठापरिक्षाममपि श्लाघनीयां तनुं समुद्वहन्नुदितो द्वितीयाचन्द्र इवाधिकतरं शोभते । यावदेनमुपसर्पामि । स्वस्ति भवते । भोः, दिष्ट्या वर्धसे । देवीहस्तगतेनापि मया पुनरप्येताभ्यामक्षिभ्यां यद्दृष्टोऽसि ।

(ख) अप्रियमिति वादितुं न पारयामि ।

(ग) समाश्वसितु प्रियवयस्यः ।

---

त्कण्ठापरिक्षाममपि श्लाघनीयां तनुं समुद्वहन्नुदितो द्वितीयाचन्द्र इवाधिकतरं शोभते । यावदेनमुपसर्पामि । स्वस्ति भवते । भोः, दिष्ट्या वर्धसे । देवीहस्तगतेनापि मया पुनरप्येताभ्यामक्षिभ्यां यद्दृष्टोऽसि । **विदूषकः** । अप्रियमिति वादितुं न पारयामि । **विदूषकः** । समाश्वसितु प्रियवयस्यः । **राजा—प्राणा इति** ।

शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥ ३ ॥

**विदूषकः**—भो, मा अण्णधा संभावेहि । सा क्खु देवीए उज्जइणिं पेसिदत्ति सुणीअदि। अदो मए अप्पिअंत्ति भणिदम्। (क)

**राजा**—अहो निरनुरोधा मयि देवी । वयस्य, केन तवैतदाख्यातम् ।

**विदूषकः**—भो, सुसंगदाए । अण्णं च । मम हत्थे ताए केणावि कज्जेण इअं रअणमाला पेसिदा । (ख)

**राजा**—किमपरं मामाश्वासयितुम् । तद्वयस्य, उपनय ।

(विदूषक उपनयति ।)

**राजा**—(गृहीत्वा रत्नमालां निर्वर्ण्य हृदये निधाय ।) अहह ।

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥ ४ ॥

वयस्य, त्वं परिधत्स्वैनाम् । येन वयमेनामपि तावद्दृष्ट्वा धृतिं करिष्यामः ।

**विदूषकः**—भो, जं भवं आणवेदित्ति। (इति कण्ठे परिदधाति।)(ग)

---

(क) भोः, मान्यथा संभावय । सा खलु देव्योज्जयिनीं प्रेषितेति श्रूयते । अतो मयाप्रियमिति भणितम् ।

(ख) भोः, सुसंगतया । अन्यच्च । मम हस्ते तया केनापि कार्येणेयं रत्नमाला प्रेषिता ।

(ग) भोः, यद्भवानाज्ञापयतीति ।

---

प्राणा वायवः । अदक्षिणमसमर्थम् । तन्मुषिताः स्थ तद्वञ्चिताः स्थ ॥ ३ ॥ **विदूषकः** । भोः, मान्यथा संभावय । सा खलु देव्योज्जयिनीं प्रेषितेति श्रूयते। अतो मयाप्रियमिति भणितमुक्तम् । **राजा** । निरनुरोधा निःसंकोधा। **विदूषकः**। भोः, सुसंगतया। अन्यच्च। मम हस्ते तया केनापि कार्येणेयं रत्नमाला प्रेषिता । **राजा** । **कण्ठाश्लेषमिति** । समासाद्य प्राप्य । तस्याः सागरिकायाः। तुल्यावस्था समदुःखा। तनुः वपुः ॥४॥ धृतिं धैर्यम्। **विदूषकः**।

**राजा**—(सास्रं निश्वस्य ।) वयस्य, दुर्लभं पुनर्दर्शनं प्रियायाः ।

**विदूषकः**—(सभयं दिशोऽवलोक्य ।) भो, मा एव्वं एत्थ उच्चं मन्तेहि । कदावि के वि एत्थ संचारेदि । (क)

(ततः प्रविशति वेत्रहस्ता वसुंधरा ।)

**वसुंधरा**—(उपसृत्य ।) जअदु जअदु भट्टा । भट्टा, एसो क्खु रुमण्णदो भाइणेओ विजअवम्मा पिअमिव किंपि णिवेदिदुकामो दुआरे चिट्ठदि । (ख)

**राजा**—वसुंधरे, अविलम्बितं प्रवेशय ।

**वसुंधरा**—जं देवो आण्णवेदित्ति । (निष्क्रम्य विजयवर्मणा सह पुनः प्रविश्य च ।) विजअवम्म, एसो क्खु भट्टा । उपसप्पदु अज्जो ।(ग)

**विजयवर्मा**—(उपसृत्य ।) जयतु जयतु देवः । देव, दिष्ट्या वर्धसे रुमण्वतो विजयेन ।

**राजा**—(सपरितोषम् ।) विजयवर्मन्, अपि जिताः कोसलाः ।

**विजयवर्मा**—देवस्य प्रभावेण ।

**राजा**—साधु रुमण्वन्, साधु । अचिरान्महत्प्रयोजनर्मनुष्ठितम् । विजयवर्मन्, तत्कथय कथाम् । अतिविस्तरतः श्रोतुमिच्छामि ।

---

(क) भोः, मैवमत्रोच्चैर्मन्त्रय । कदापि केचिदत्र संचरन्ति ।

(ख) जयतु जयतु भर्ता । भर्तः, एष खलु रुमण्वतो भागिनेयो विजयवर्मा प्रियमिव किमपि निवेदयितुकामो द्वारे तिष्ठति ।

(ग) यद्देव आज्ञापयतीति । विजयवर्मन्, एष खलु भर्ता । उपसर्पत्वार्यः ।

---

भोः, यद्भवानाज्ञापयतीति । **विदूषकः** । भोः, मैवमत्रोचैर्मन्त्रय । कदापि केचिदत्र संचरन्ति । **वसुंधरा** । जयतु जयतु भर्ता । भर्तः, एष खलु रुमण्वतो भागिनेयो विजयवर्मा प्रियमिव किमपि निवेदयितुकामो द्वारे तिष्ठति । **वसुंधरा** । यद्देव आज्ञापयतीति । विजयवर्मन्, एष खलु भर्ता । उपसर्पत्वार्यः ।

**विजयवर्मा**—देव, श्रूयताम् । इतो देवादेशात्कतिपयैरेवाहोभिरनेककरितुरगपत्तिदुर्निवारेण महता बलसमूहेन गत्वा विन्ध्यदुर्गावस्थितस्य कोसलनृपतेर्द्वारमवष्टभ्य सेनाः समवासयितुं समारब्धवान् ।

**राजा**—ततस्ततः ।

**विजयवर्मा**—ततः कोसलेश्वरोऽप्यतिदर्पात्परिभवमसहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान् ।

**विदूषकः**—भो, लहुं आचक्ख । वेवदि मे हिअअम् । (क)

**राजा**—ततस्ततः ।

**विजयवर्मा**—देव, कृतनिश्चयश्चासौ

योद्धुं निर्गत्य विन्ध्याद्भवदभिमुखस्तत्क्षणं दिग्विभागा-
न्विन्ध्येनेवापरेण द्विरदपतिघटापीडबन्धेन रुन्धन् ।
वेगाद्बाणान्विमुञ्चन्समदगजघटोत्पिष्टपत्तिर्निपत्य
प्रत्यैच्छद्वाञ्छितासिद्विगुणितरभसस्तं रुमण्वान्क्षणेन ॥ ५ ॥

अपि च ।

अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्गमद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले
एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥ ६ ॥

---

(क) भोः, लघ्वाचक्ष्व । वेपते मे हृदयम् ।

---

**विजयवर्मा** । अवष्टभ्यारुन्ध्य । समवासयितुं तत्रैव स्थापयितुम् । समारब्धवान्कृतवान् । **विजयवर्मा** । अतिदर्पादतिगर्वात् । हास्तिकप्रायं हस्तिप्रचुरम् । **विदूषकः** । भोः, लघ्वाचक्ष्व । वेपते मे हृदयम् । **विजयवर्मा** । **योद्धुमिति** । दिग्विभागान्दिगन्तान् । आपीडबन्धेन स्वनोबन्धेन(?) । गजघटोत्पिष्टपत्तिः हस्तिसमूहेन दलितपपत्तिः(!) । स ईक्षितवानिति शेषः । प्रत्यैच्छत्सन्मुखमागतवान् ॥ ५ ॥ **अस्त्रव्यस्तेति** । शिरस्त्रमुष्णीषम् । कषणै-

**विदूषकः**—जेदु भवं । जिदं अह्मेहिं । (इति नृत्यति ।) (क)

**राजा**—साधु कोसलपते, साधु । मृत्युरपि ते श्लाघ्यः । यस्य हि रिपवोऽपि पुरुषकारमेवं वर्णयन्ति । ततस्ततः ।

**विजयवर्मा**—देव, ततो रुमण्वानपि कोसलेषु मद्भ्रातरं ज्यायांसं जयवर्माणं स्थापयित्वा प्रहारव्रणितहास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैःशनैरागच्छत्येव ।

**राजा**—वसुंधरे, उच्यतां यौगन्धरायणः । प्रदर्श्यतां मत्प्रसादस्य विभव इति ।

**वसुंधरा**—जं देवो आण्णवेदित्ति । (इति विजयवर्मणा सह निष्क्रान्ता ।) (ख)

(ततः प्रविशति काञ्चनमाला ।)

**काञ्चनमाला**—आण्णत्तह्मि देवीए । जह गच्छ हञ्जे कञ्चणमाले, एदं इन्दजालिअं अज्जउत्तस्स दंसेहि । (इति परिक्रम्यावलोक्य च ।) एसो क्खु भट्टा । ता जाव उवसप्पामि । (उपसृत्य ।) जेदु जेदु भट्टा । भट्टा, देवी विण्णवेदि । एसो क्खु उज्जयिणीदो संवरणसिद्धि णाम इन्दजालिओ आअदो । ता पेक्खदु भट्टा । (ग)

---

(क) जयतु भवान् । जितमस्माभिः ।

(ख) यद्देव आज्ञापयतीति ।

(ग) आज्ञप्तास्मि देव्या । यथा गच्छ हञ्जे काञ्चनमाले, एतमिन्द्रजालिकमार्यपुत्रस्य दर्शय । एष खलु भर्ता । तद्यावदुपसर्पामि । जयतु जयतु भर्ता । भर्तः, देवी विज्ञापयति । एष खलूज्जयिनीतः संवरणसिद्धिर्नामेन्द्रजालिक आगतः । तत्प्रेक्षतु भर्ता ।

---

र्घर्षणैः । आजिमुखे रणाग्रे । मत्तद्विपस्थ उन्मत्तहस्तिस्थितः ॥६॥ **विदूषकः** । जयतु भवान् । जितमस्माभिः । **राजा** । पुरुषकारं पुरुषार्थम् । **विजयवर्मा** । ज्यायांसं ज्येष्ठम् । **वसुंधरा** । यद्देव आज्ञापयतीति । **काञ्चनमाला** । आज्ञप्तास्मि देव्या । यथा गच्छ हञ्जे काञ्चनमाले, एतमिन्द्रजालिकमार्यपुत्रस्य दर्शय । एष खलु भर्ता । तद्यावदुपसर्पामि । जयतु जयतु भर्ता । भर्तः, देवी विज्ञापयति ।

**राजा**—अस्ति नः कौतुकमिन्द्रजालिके। ततः शीघ्रं प्रवेशय ।

**काञ्चनमाला**—जं भट्टा आण्णवेदित्ति । (इति निष्क्रम्य पिच्छिकाहस्तेनेन्द्रजालिकेन सह प्रविशति।) (क)

**चेटी**—एसो भट्टा । ता उपसप्पदु अज्जो । (ख)

**इन्द्रजालिकः**—(उपसृत्य पिच्छिकां भ्रामयित्वा ।)

पणमह चलणे इन्दस्स इन्दजालिअपिणद्धणामस्स ।
तह जेव्व वि सम्बरस्स सुपरिट्ठिदजसस्स ॥ ७ ॥

देव,

किं धरणिए मिअङ्को आआसे महिअरो जले जलणो ।
मज्झह्लम्मि पओसो दाविज्जइ देहि आण्णत्तिम् ॥ ८ ॥ (ग)

**विदूषकः**—भो वअस्स, अवहिदो होहि। भो, ईदिसो से अवट्ठम्भो जेण एव्वं संभावीअदि । (घ)

---

(क) यद्भर्ताज्ञापयतीति ।

(ख) एष भर्ता । तदुपसर्पत्वार्यः ।

(ग) प्रणमत चरणे इन्द्रस्येन्द्रजालिकपिनद्धनाम्नः ।
तथैवापि शम्बरस्य सुपरिस्थितयशसः ॥

देव,

किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः ।
मध्याने प्रदोषो दर्शयामि देह्याज्ञप्तिम् ॥

(घ) भो वयस्य, अवहितो भव । भोः, ईदृशोऽस्यावष्टम्भो येनैवं संभाव्यते ।

---

एष खलूज्जयिनीतः संवरणसिद्धिर्नामेन्द्रजालिक आगतः । तत्प्रेक्षतु भर्ता । **राजा** । इन्द्रजालिके नटे । **काञ्चनमाला** । यद्भर्ताज्ञापयतीति । **चेटी** । एष भर्ता । तदुपसर्पत्वार्यः । **इन्द्रजालिकः** । प्रणमत चरणे इन्द्रस्येन्द्रजालिकपिनद्धनाम्नः । तथैवापि शम्बरस्य सुपरिस्थितयशसः ॥७॥ देव, किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः । मध्याह्ने प्रदोषो दर्शयामि देह्याज्ञप्तिम् ॥८॥ **विदूषकः**। भो वयस्य, अवहितो भव। भोः, ईदृशोऽस्यावष्टम्भो

**इन्द्रजालिकः**—देव,

किं जप्पिदेण बहुणा जं जं हिअएण इच्छदि सं दिट्ठुम् ।
तं तं दंसेमि अहं गुरुणो मन्तप्पसादेण ॥ ९ ॥ (क)

**राजा**—भद्र, तिष्ठ तावत् । काञ्चनमाले, उच्यतां देवी । युष्मदीय एवायमिन्द्रजालिकः । विजनीकृतश्चायमुद्देशः । तदागच्छ । सहितावेव पश्यावः ।

**काञ्चनमाला**—जं भट्टा आण्णवेदित्ति । (इति निष्क्रम्य वासवदत्तया सह प्रविशति।) (ख)

**वासवदत्ता**—कञ्चणमाले, उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं इन्दजालिए वक्खवादो । (ग)

**काञ्चनमाला**—तेण णाभिउलबहुमाणो क्खु देवीए एसो । ता एदु भट्टिणी । (घ)

(इति परिक्रामतः ।)

**काञ्चनमाला**—भट्टिणि, एसो भट्टा । ता उपसप्पदु देवी । (ङ)

---

(क) देव,

किं जल्पितेन बहुना यद्यद्धृदयेनेच्छति सं द्रष्टुम् ।
तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रसादेण ॥

(ख) यद्भर्ताज्ञापयतीति ।

(ग) काञ्चनमाले, उज्जयिनीत आगत इत्यस्ति मे तस्मिन्निन्द्रजालिके पक्षपातः ।

(घ) तेन नाभिकुलबहुमानः खलु देव्या एषः । तदेतु भर्त्री ।

(ङ) भर्त्रि, एष भर्ता । तदुपसर्पतु देवी ।

---

येनैवं संभाव्यते । **इन्द्रजालिकः**। देव, किं जल्पितेन बहुना यद्यद्धृदयेनेच्छति स द्रष्टुम् । तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रसादेन ॥ ९ ॥ **काञ्चनमाला** । यद्भर्ताज्ञापयतीति । **वासवदत्ता** । काञ्चनमाले, उज्जयिनीत आगत इत्यस्ति मे तस्मिन्निन्द्रजालिके पक्षपातः । **काञ्चनमाला** । तेन नाभिकुलबहुमानः खलु देव्या एषः । तदेतु भर्त्री । नाभिकुलं मातृक्षत्रियकुलम् । **काञ्चनमाला**।

**वासवदत्ता**—(उपसृत्य ।) जेदु अज्जउत्तो । (क)

**राजा**—देवि, बहुतरमनेन गर्जितम् । तदिहस्थावेव पश्याव-स्तावत् ।

(वासवदत्तोपविशति ।)

**राजा**—भद्र, प्रस्तूयतां बहुविधमिन्द्रजालम् ।

**इन्द्रजालिकः**—जं देवो आणवेदित्ति । (बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रामयन् ।)

हरिहरबह्मप्पमुहं देवं दंसेमि देवराअं च ।
गअणे वि सिद्धविज्जाहरवहुसत्थं च णच्चन्तम् ॥ १० ॥ (ख)

(सर्वे सविस्मयं पश्यन्ति ।)

**राजा**—(ऊर्ध्वं दृष्ट्वासनादवतरन् ।) आश्चर्यमाश्चर्यम् ।

**विदूषकः**—अच्चरिअं अच्चरिअम् । (ग)

**राजा**—देवि, पश्य ।

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥११॥

---

(क) जयत्वार्यपुत्रः ।

(ख) यद्देव आज्ञापयतीति ।

हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च ।
गगनेऽपि सिद्धविद्याधरवधूसार्थं च नृत्यन्तम् ॥

(ग) आश्चर्यमाश्चर्यम् ।

---

र्भर्त्रि, एष भर्ता। तदुपसर्पतु देवी । **वासवदत्ता** । जयत्वार्यपुत्रः । **इन्द्रजालिकः** । यद्देव आज्ञापयतीति । हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च । गगनेऽपि सिद्धविद्याधरवधूसार्थं च नृत्यन्तम् ॥१०॥ **विदूषकः** । आश्चर्यमाश्चर्यम् । **राजा** । **एष इति** । रजनिकरकला चन्द्रमुखे वा(?) । चलचरणरणन्नूपुराश्चञ्चलपा-

**विदूषकः**—(अपवार्य।) हा दासीए उत्त इन्दजालिअ, किं एदेहिं देवेहिं अच्छराहिं वा दंसिदाहिं । जइ दे इमिणा परितुट्टेण कज्जं दंसेहि साअरिअम् । (क)

(ततः प्रविशति वसुंधरा ।)

**वसुंधरा**—(राजानमुपसृत्य ।) जेदु भट्टा । अमच्चजोअन्धराअणो विण्णवेदि । एसो क्खु विक्कमबाहुणा कञ्चुइणा सह अणुप्पेसिदो वसुभूदी । ता णं अरिहसि देव, इमस्सिं एव्व सुन्दरमुहुत्तए पेक्खिदुम् । अहंपि कज्जसेसं समाप्पिअ आअदो ज्जेव । (ख)

**वासवदत्ता**—अज्जउत्त, चिट्ठदु दाव पेक्खअम् । अअं मादुलकुलादो अज्ज प्पधाणो अमच्चवसुभूदी आअदो । ता एदं दाव पेक्खदु अज्जो । (ग)

**राजा**—यथाह देवी । (इन्द्रजालिकं प्रति ।) भद्र, विश्राम्यतामिदानीम् ।

---

(क) आः दास्याः पुत्र इन्द्रजालिक, किमेतैर्देवैरप्सरोभिर्वा दर्शिताभिः । यदि ते एतेन परितुष्टेन कार्यं दर्शय सागरिकाम् ।

(ख) जयतु भर्ता । अमात्ययौगन्धरायणो विज्ञापयति । एष खलु विक्रमबाहुना कञ्चुकिना सहानुप्रेषितो वसुभूतिः । तदेनमर्हसि देव, अस्मिन्नेव सुन्दरमुहूर्ते प्रेक्षितुम् । अहमपि कार्यशेषं समाप्यागत एव ।

(ग) आर्यपुत्र, तिष्ठतु तावत्प्रेक्षणम् । अयं मातुलकुलादद्य प्रधानोऽमात्यवसुभूतिरागतः । तदेनं तावत्प्रेक्षत्वार्यः ।

---

दशब्दायमानभूषणाः ॥११॥ **विदूषकः** । आः दास्याः पुत्र इन्द्रजालिक, किमेतैर्देवैरप्सरोभिर्वादर्शिताभिः । यदि ते एतेन परितुष्टेन कार्यं दर्शय सागरिकाम् । **वसुंधरा** । जयतु भर्ता । अमात्ययौगन्धरायणो विज्ञापयति । एष खलु विक्रमबाहुना कञ्चुकिना सहानुप्रेषितो वसुभूतिः । तदेनमर्हसि देव, अस्मिन्नेव सुन्दरमुहूर्ते प्रेक्षितुम् । अहमपि कार्यशेषं समाप्यागत एव । **वासवदत्ता** । आर्यपुत्र, तिष्ठतु तावत्प्रेक्षणम् । अयं मातुलकुलादद्य प्रधानोऽमात्यवसुभूति-

**इन्द्रजालिकः**—(पुनः पिच्छिकां भ्रामयति ।) जं देवो आणवेदित्ति । (निष्क्रामन् ।) एक्को उण खेलओ अवस्सं एव्व देवेण पेक्खिदव्वो । (क)

**राजा**—भद्र, एवं द्रक्ष्यामः ।

**वासवदत्ता**—कञ्चणमाले, देहि से पारितोसिअम् । (ख)

**चेटी**—जं देवी आणवेदित्ति । (इन्द्रजालिकेन सह निष्क्रान्ता ।)(ग)

**राजा**—वसन्तक, प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः ।

**विदूषकः**—जं भट्टा आणवेदित्ति । (इति निष्क्रान्तः ।) (घ)

(ततः प्रविशति वसन्तकेन प्रत्युद्गम्यमानो वसुभूतिर्बाभ्रव्यश्च ।)

**वसुभूतिः**—(समन्तादवलोक्य ।) अहो वत्सेश्वरस्यानुभावः । तथाहि ।

आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभा-
न्संगीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन्क्षणम् ।
सद्योविस्मृतसिंहलेशविभवः कक्षाप्रदेशेऽप्यहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः ॥ १२ ॥

**बाभ्रव्यः**—वसुभूते, अद्य खलु चिरात्स्वामिनं द्रक्ष्यामीति यत्सत्यमानन्दातिशयेन किमप्यवस्थान्तरमनुभवामि । कुतः ।

---

(क) यद्देव आज्ञापयतीति । एकः पुनः खेलोऽवश्यमेव देवेन प्रेक्षितव्यः ।

(ख) काञ्चनमाले, देह्यस्य पारितोषिकम् ।

(ग) यद्देव्याज्ञापयतीति ।

(घ) यद्भर्ताज्ञापयतीति ।

---

रागतः । तदेनं तावत्प्रेक्षत्वार्थः । **इन्द्रजालिकः** । यद्देव आज्ञापयतीति । एकः पुनः खेलोऽवश्यमेव देवेन प्रेक्षितव्यः । **वासवदत्ता** । काञ्चनमाले, देह्यस्य पारितोषिकम् । **चेटी** । यद्देव्याज्ञापयतीति । **विदूषकः** । यद्भर्ताज्ञापयतीति । **वसुभूतिः । आक्षिप्त इति** । आक्षिप्तः श्रियाहृतचित्तः । गोष्ठीषु राजसभासु कक्षाप्रदेशे कक्षाप्रकोष्ठे हर्म्यादिः । ग्राम्यो ग्रामीण इव ॥ १२ ॥ **बाभ्रव्यः** ।

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दविस्पष्टां दृष्टिं तिरयति पुनर्बाष्पसलिलैः ।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥ १३ ॥

**विदूषकः**—(अग्रे भूत्वा ।) एदु एदु अमच्चो । (क)

**वसुभूतिः**—(विदूषकस्य कण्ठे रत्नमालां दृष्ट्वापवार्य ।) बाभ्रव्य, जाने सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानसमये दत्तेति ।

**बाभ्रव्यः**—अमात्य, अस्ति सादृश्यम् । तत्किं वसन्तकाद-वगच्छामि प्रभवमस्याः ।

**वसुभूतिः**—बाभ्रव्य, मा मैवम् । महति राजकुले रत्नबाहु-ल्यान्न दुर्लभो भूषणानां संवादः ।

(इति परिक्रामन्ति ।)

**विदूषकः**—(राजानमुद्दिश्य ।) एसो वच्छाधिवो । ता उवस-प्पदु अमच्चो । (ख)

**वसुभूतिः**—(उपसृत्य ।) जयतु जयतु देवः ।

**राजा**—(उत्थाय ।) अभिवादये ।

**वसुभूतिः**—अतिश्रेयांस्त्वं भूयाः ।

**राजा**—आसनमासनमार्याय ।

**विदूषकः**—(आसनमादाय ।) भो, एदमासणम् । उवविसदु अमच्चो । (ग)

---

(क) एत्वेत्वमात्यः ।

(ख) एष वत्साधिपः । तदुपसर्पत्वमात्यः ।

(ग) भोः, एतदासनम् । उपविशत्वमात्यः ।

---

**विवृद्धिमिति** । अविस्पष्टामप्रकटाम् । जडयति स्तब्धयति । परितोषः संतोषः ॥१३॥ **विदूषकः** । एत्वेत्वमात्यः । **वसुभूतिः** । संवादः सादृश्यम् । **विदूषकः** । एष वत्साधिपः । तदुपसर्पत्वमात्यः । **विदूषकः** । भोः, एतदासनम् ।

(वसुभूतिरुपविशति ।)

**कञ्चुकी**—देव, बाभ्रव्यः प्रणमति ।

**राजा**—(पृष्ठे हस्तं दत्त्वा ।) बाभ्रव्य, इत आस्यताम् ।

**कञ्चुकी**—(उपविशन् ।) देवि, बाभ्रव्यः प्रणमति ।

**विदूषकः**—अमच्च, एसा देवी वासवदत्ता पणमदि । (क)

**वासवदत्ता**—अज्ज, पणमामि । (ख)

**वसुभूतिः**—आयुष्मति, वत्सराजसदृशं पुत्रमाप्नुहि ।

(सर्वे उपविशन्ति ।)

**राजा**—आर्य वसुभूते, अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ।

**वसुभूतिः**—(ऊर्ध्वमवलोक्य निःश्वस्य च ।) देव, न जाने किं विज्ञापयामि मन्दभाग्यः । (अधोमुखस्तिष्ठति ।)

**वासवदत्ता**—(सविषादमात्मगतम् ।) हद्धी । किं दाणिं वसुभूदी कधइस्सदि । (ग)

**राजा**—वसुभूते, कथय । किमेवं मां पर्याकुलयसि ।

**बाभ्रव्यः**—(अपवार्य ।) चिरमपि स्थित्वा यत्कथनीयं तदिदानीमेव कथ्यताम् ।

**वसुभूतिः**—(सास्रम् ।) देव, न शक्यं निवेदयितुम् । तथाप्येष कथयामि मन्दभाग्यः । यासौ तत्रभवतः सिंहलेश्वरस्य दुहिता रत्नावली नामायुष्मती सिद्धादेशेनादिष्टा योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यतीति ।

**राजा**—ततस्ततः ।

---

(क) अमात्य, एषा देवी वासवदत्ता प्रणमति ।

(ख) आर्य, प्रणमामि ।

(ग) हा धिक् । किमिदानीं वसुभूतिः कथयिष्यति ।

---

उपविशत्यमात्यः । **विदूषकः** । अमात्य, एषा देवी वासवदत्ता प्रणमति । **वासवदत्ता** । आर्य, प्रणमामि । **वासवदत्ता** । हा धिक् । किमिदानीं वसु-

**वसुभूतिः**—तत्प्रत्ययादार्यार्थं यौगन्धरायणेन बहुशः प्रार्थ्यमानापि सा सिंहलेश्वरेण वासवदत्तायाश्चित्तखेदं परिहरता न दत्ता ।

**राजा**—(अपवार्य ।) देवि, किमिदमिदानीमलीकं त्वदीयमातुलामात्यः कथयति ।

**वासवदत्ता**—(विमृश्य ।) अज्जउत्त, अहं वि ण आणामि को एत्थ अलिअं मन्तेदि । (क)

**विदूषकः**—ताए किं संवुत्तम् । (ख)

**वसुभूतिः**—ततो लावाणकेन वह्निना देवी दग्धेति वार्तामुत्पाद्य देवेन तदन्तिकं बाभ्रव्यः प्रहितः । पुनरपि सा प्रार्थिता च। ततस्तत्रभवता सिंहलेश्वरेण चिन्तितम् । देवेन सहास्माकं संबन्धलोपो मा भूदिति दत्ता सा रत्नावली देवाय प्रतिपादयितुमस्माभिरानीयमाना समुद्रे यानभङ्गान्निमग्ना । (इति रुदन्नधोमुखस्तिष्ठति ।)

**वासवदत्ता**—(सास्रम् ।) हा हदह्मि मन्दभाइणी । हा बहिणिए रअणावलि, कहिं दाणिं सि । देहि मे पडिवअणम् । (इति मूर्छिता पतति ।)(ग)

**राजा**—समाश्वसिहि समाश्वसिहि । दुरवगाहा गतिर्दैवस्य । वाहनभङ्गपतितोत्थितौ नन्वेतावेव ते निदर्शनम् । (इति वसुभूतिबाभ्रव्यौ दर्शयति ।)

**वासवदत्ता**—अज्जउत्त, जुज्जदि एव्वम् । परं कुदो मम एत्तिअं भाअधेअम् । (घ)

---

(क) आर्यपुत्र, अहमपि न जानामि कोऽत्रालीकं मन्त्रयते ।

(ख) तस्याः किं संवृत्तम् ।

(ग) हा हतास्मि मन्दभागिनी । हा भगिनिके रत्नावलि, क्वेदानीमसि । देहि मे प्रतिवचनम् ।

(घ) आर्यपुत्र, युज्यत एवम् । परं कुतो ममैतावद्भागधेयम् ।

---

भूतिः कथयिष्यति । **वासवदत्ता** । आर्यपुत्र, अहमपि न जानामि कोऽत्रालीकं मन्त्रयते । **विदूषकः** । तस्याः किं संवृत्तम् । **वासवदत्ता** । हा हतास्मि मन्दभागिनी । हा भगिनिके रत्नावलि, क्वेदानीमसि । देहि मे प्रतिवचनम् । **वासवदत्ता** । आर्यपुत्र, युज्यत एवम् । परं कुतो ममैतावद्भागधेयम् । भा-

**राजा**—(अपवार्य ।) बाभ्रव्य, किमेवमिति सर्वथा नावगच्छामि ।

**बाभ्रव्यः**—देव, श्रूयताम् ।

(नेपथ्ये महान्कलकलः ।)

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥ १४॥

(सर्वे संभ्रान्ताः पश्यन्ति ।)

**राजा**—कथमन्तःपुरेऽग्निः । (ससंभ्रममुत्थाय ।) कष्टम् । देवी वासवदत्ता दग्धा ।

देवीदाहप्रवादोऽयं योऽभूल्लावाणके पुरा ।
करिष्यन्निव तत्सत्यं मन्ये वह्निः समुत्थितः ॥ १५ ॥

**वासवदत्ता**—अज्जउत्त, परित्ताहि । (क)

**राजा**—अये, कथमतिसंभ्रमात्पार्श्वस्थापि देवी नोपलक्षिता । (देव्याः पाणिं गृहीत्वालिङ्ग्य ।) देवि, समाश्वसिहि समाश्वसिहि ।

**वासवदत्ता**—अज्जउत्त, मए अत्तणो किदे ण भणिदम् । किं उण एसा क्खु मए णिग्घिणाए णिअडसंदानिदा साअरिआ विवज्जेदि । ता परित्ताअदु अज्जउत्तो । (ख)

---

(क) आर्यपुत्र, परित्रायस्व ।

(ख) आर्यपुत्र, मयात्मनः कृते न भणितम् । किं पुनरेषा खलु मया निर्घृणया निगडसंदानिता सागरिका विपद्यते । तत्परित्रायतामार्यपुत्रः ।

---

गधेयं भाग्यम् । **हर्म्याणामिति** । पिशुनितः सूचितः । प्लोषो दाहः ॥ १४ ॥ **राजा । देवीदाहेति** । लावाणके लवणमद्राङ्कभूमौ (?) । करिष्यन्निव संपादयन्निव ॥ १५ ॥ **वासवदत्ता** । आर्यपुत्र, परित्रायस्व । **वासवदत्ता** । आर्यपुत्र, मयात्मनः कृते न भणितम् । किं पुनरेषा खलु मया निर्घृणया निगडसंदानिता सागरिका विपद्यते । निगडसंदानिता पादबन्धनबद्धा । त-

**राजा**—कथं देवि, सागरिका विपद्यते । एष गच्छामि ।

**वसुभूतिः**—देव, किमिदमकारणमेव पतङ्गवृत्तिः क्रियते ।

**बाभ्रव्यः**—देव, युक्तमाह वसुभूतिः ।

**विदूषकः**—(राजानमुत्तरीये गृहीत्वा ।) भो, मा क्खु साहसं करेहि । (क)

**राजा**—(उत्तरीयमाकर्षन् ।) अरे धिङ् मूर्ख, सागरिका विपद्यते । किमद्यापि प्राणाः परिरक्ष्यन्ते । (ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयति ।)

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥ १६ ॥

**वासवदत्ता**—कधं मम दुक्खआइणीए वअणादो एव्वं व्ववसिदं अज्जउत्तेण । ता अहंपि अज्जउत्तं जेव्व अणुगमिस्सम् । (ख)

**विदूषकः**—(परिक्रामन्नग्रतो भूत्वा ।) भोदि, अहंवि दे पन्थोवदेसको होमि । (ग)

**वसुभूतिः**—कथं प्रविष्ट एव ज्वलनं वत्सराजः । तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्तमिहैवात्मानमाहुतीकर्तुम् ।

---

(क) भोः, मा खलु साहसं कुरु ।

(ख) कथं मम दुःखकारिण्या वचनादेवं व्यवसितमार्यपुत्रेण । तदहमप्यार्यपुत्रमेवानुगमिष्ये ।

(ग) भवति, अहमपि ते पन्थोपदेशको भवामि ।

---

त्परित्रायत्वार्यपुत्रः । **विदूषकः** । भोः, मा खलु साहसं कुरु । **राजा** । **विरमेति** । विरम विरम शम शम । चक्रवालं मण्डलम् ॥ १६ ॥ **वासवदत्ता** । कथं मम दुःखकारिण्या वचनादेवं व्यवसितमार्यपुत्रेण । तदहमप्यार्यपुत्रमेवानुगमिष्ये । **विदूषकः** । भवति, अहमपि ते पन्थोपदेशको भवामि ।

**कञ्चुकी**—(सास्रम् ।) हा महाराज, किमिदमकारणमेव भरतकुलं संशयतुलामारोपितम् । अथवा किं प्रलापेन । अहमपि भक्तिसदृशमाचरामि ।

(इति सर्वेऽग्निप्रवेशं नाटयन्ति ।)

**राजा**—(दक्षिणबाहुस्पन्दं निरूप्य ।) एतदवस्थस्य मम कुत एतत्फलम् । (अग्रतोऽवलोक्य सहर्षोद्वेगम् ।) कथमासन्नहुतवहा वर्तते सागरिका । तत्त्वरितमेनां संभावयामि ।

(ततः प्रविशति निगडसंयता सागरिका ।)

**सागरिका**—(समन्तादवलोक्य ।) हद्धी । आसमन्तदो प्पज्जलिदो हुदवहो । अज्ज हुदवहो दिट्ठिआ करिस्सदि मे दुक्खावसाणम् । (क)

**राजा**—(त्वरितमुपसृत्य ।) अयि प्रिये, किमद्यापि मध्यस्थतया वर्तसे ।

**सागरिका**—(राजानं दृष्ट्वात्मगतम् ।) कधं अज्जउत्तो । ता एदं पेक्खिअ पुणोवि मे जीविदासा संवुत्ता । (प्रकाशम् ।) भट्टा, परित्ताहि । (ख)

**राजा**—भीरु, अलं भयेन । (कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ।) अहो, क्षणादपगतोऽयं मे संतापः । प्रिये, समाश्वसिहि समाश्वसिहि ।

> व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः ।
> यतः संतापमेवायं स्पर्शस्ते हरति प्रिये ॥ १७ ॥

---

(क) हा धिक् । आसमन्ततः प्रज्वलितो हुतवहः । अद्य हुतवहो दिष्ट्या करिष्यति मे दुःखावसानम् ।

(ख) कथमार्यपुत्रः । तदेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता । भर्तः, परित्रायस्व ।

---

**सागरिका** । हा धिक् । आसमन्ततः प्रज्वलितो हुतवहः । अद्य हुतवहो दिष्ट्या करिष्यति मे दुःखावसानम् । **सागरिका** । कथमार्यपुत्रः । तदेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता । भर्तः, परित्रायस्व । **राजा** । **व्यक्तमिति** । न धक्ष्यति

(अक्षिणी समुन्मील्य निरीक्ष्य च ।) अहो महदाश्चर्यम् । क्वासौ प्रज्वलनहुताशनः । तदवस्थमेतदन्तःपुरम् । कथमचिन्त्यरूपमेवम् ।

**वासवदत्ता**—(राज्ञः शरीरं परामृषन्ती सहर्षम् ।) दिट्ठिआ अक्खदसरीरो अज्जउत्तो । (क)

**बाभ्रव्यः**—विजयतां महाराजः । देव, दिष्ट्या वर्धसे । पुनरुच्छ्वसिताः स्मः ।

**राजा**—वसुभूतिरयम् ।

**वसुभूतिः**—देव, दिष्ट्या वर्धसे ।

**राजा**—विदूषकोऽयम् ।

**विदूषकः**—जेदु जेदु भवं । (ख)

**राजा**—(विचिन्त्य सवितर्कम् ।) स्वप्नोऽयमिति भाति । किं न्विदमिन्द्रजालम् ।

**विदूषकः**—भो, मा संदेहं करेहि । इन्दआलं क्खु एदम् । भणिदं तेण दासीए उत्तेण इन्दआलिएण जह अवस्सं एव्व मह एक्को खेलओ देवेण दट्ठव्वोत्ति । (ग)

**राजा**—देवि, त्वद्वचनादियमस्माभिरिहानीता सागरिका ।

**वासवदत्ता**—(विहस्य ।) अज्जउत्त, जाणिदं दे सव्वम् । (घ)

---

(क) दिष्ट्याक्षतशरीर आर्यपुत्रः ।

(ख) जयतु जयतु भवान् ।

(ग) भोः, मा संदेहं कुरु । इन्द्रजालं खल्वेतत् । भणितं तेन दास्याः पुत्रेणेन्द्रजालिकेन यथावश्यमेव ममैकः खेलो देवेन प्रेक्षितव्य इति ।

(घ) आर्यपुत्र, ज्ञातं ते सर्वम् ।

---

न दहति । संतापं कामज्वरदाहम् ॥ १७ ॥ **वासवदत्ता** । दिष्ट्याक्षतशरीर आर्यपुत्रः । **विदूषकः** । जयतु जयतु भवान् । **विदूषकः** । भोः, मा संदेहं कुरु । इन्द्रजालं खल्वेतत् । भणितं तेन दास्याः पुत्रेणेन्द्रजालिकेन यथावश्यमेव ममैकः खेलो देवेन प्रेक्षितव्य इति । **वासवदत्ता** । आर्यपुत्र, ज्ञातं ते सर्वम् ।

**वसुभूतिः**—(सागरिकां दृष्ट्वापवार्य ।) बाभ्रव्य, सदृशीयं राजपुत्र्या ।

**बाभ्रव्यः**—अमात्य, ममाप्येतदेव मनसि वर्तते ।

**वसुभूतिः**—(प्रकाशं राजानमुद्दिश्य ।) देव, कुत इयं कन्यका ।

**राजा**—देवी जानाति ।

**वसुभूतिः**—देवि, कुतः पुनरियं कन्यका ।

**वासवदत्ता**—अमच्च, एसा क्खु साअरदो पाविदेत्ति भणिअ अमच्चजोअन्धराअणेण मम हत्थे णिक्खित्ता । अदो एव्व साअरिआत्ति सद्दाईअदि । (क)

**राजा**—(स्वगतम् ।) कथं यौगन्धरायणेन न्यस्ता । कथमसौ ममानिवेद्य किंचित्करिष्यति ।

**वसुभूतिः**—(अपवार्य ।) बाभ्रव्य, यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला, अस्या अपि सागरात्प्राप्तिः, तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावलीयम् । (इत्युपसृत्य प्रकाशम् ।) आयुष्मति रत्नावलि राजपुत्रि, त्वमीदृशीमवस्थां गतासि ।

**सागरिका**—(वसुभूतिं दृष्ट्वा सास्रम् ।) कधं अमच्चो वसुभूदी ।(ख)

**वसुभूतिः**—हा हतोऽस्मि मन्दभाग्यः । (इति भूमौ पतति ।)

**सागरिका**—हा हदह्मि मन्दभाइणी । हा ताद, हा अम्ब, कहिं सि। देहि मे पडिवअणम् । (इत्यात्मानं पातयन्ती मोहमुपगता ।) (ग)

---

(क) अमात्य, एषा खलु सागरात्प्राप्तेत्युक्त्वामात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता । अत एव सागरिकेति शब्दायते ।

(ख) कथममात्यो वसुभूतिः ।

(ग) हा हतास्मि मन्दभागिनी । हा तात, हा अम्ब, कुत्रासि । देहि मे प्रतिवचनम् ।

---

**वासवदत्ता** । अमात्य, एषा खलु सागरात्प्राप्तेत्युक्त्वामात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता । अत एव सागरिकेति शब्दायते । **सागरिका** । कथममात्यो वसुभूतिः । **सागरिका** । हा हतास्मि मन्दभागिनी । हा तात, हा अम्ब,

**वासवदत्ता**—(ससंभ्रमम् ।) कञ्चुइ, इयं सा मे बहिणिआ रअणावली । (क)

**कञ्चुकी**—देवि, इयमेव सा ।

**वासवदत्ता**—(रत्नावलीमालिङ्ग्य ।) बहिणी समस्ससिदु । (ख)

**राजा**—कथमुदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम् ।

**विदूषकः**—(स्वगतम् । रत्नमालां स्पृशन् ।) पढमं एव्व मए जाणिदं ण हु सामण्णजणस्स ईदिसो परिच्छदो होदित्ति । (ग)

**वसुभूतिः**—(उत्थाय ।) राजपुत्रि, समाश्वसिहि समाश्वसिहि । नन्वियं ज्यायसी ते भगिनी दुःखमास्ते । तत्परिष्वजस्वैनाम् ।

**रत्नावली**—(समाश्वस्य राजानं तिर्यगवलोक्य स्वगतम् ।) किदावराधा क्खु अहम् । देवीए ण सक्कणोमि मुहं दंसिदुम् । (इत्यधोमुखी तिष्ठति ।) (घ)

**वासवदत्ता**—(सास्रं बाहू प्रसार्य ।) एहि अदिणिट्ठुरे, दाणिं पिअबहिणिए, सिणेहं दंसेहि । (इति कण्ठे गृह्णाति ।) (ङ)

---

(क) कञ्चुकिन्, इयं सा मे भगिनिका रत्नावली ।

(ख) भगिनी समाश्वसितु ।

(ग) प्रथममेव मया ज्ञातं न खलु सामान्यजनस्येदृशः परिच्छदो भवतीति ।

(घ) कृतापराधा खल्वहम् । देव्या न शक्नोमि मुखं दर्शितुम् ।

(ङ) एह्यतिनिष्ठुरे, इदानीं प्रियभगिनिके, स्नेहं दर्शय ।

---

कुत्रासि । देहि मे प्रतिवचनम् । **वासवदत्ता** । कञ्चुकिन्, इयं सा मे भगिनिका रत्नावली । **वासवदत्ता** । भगिनी समाश्वसितु । **राजा** । उदात्तो महान् । **विदूषकः** । प्रथममेव मया ज्ञातं न खलु सामान्यजनस्येदृशः परिच्छदो भवतीति । **रत्नावली** । कृतापराधा खल्वहम् । देव्या न शक्नोमि मुखं दर्शितुम् । **वासवदत्ता** । एह्यतिनिष्ठुरे, इदानीं प्रियभगिनिके, स्नेहं दर्शय । **वास-**